धूमाग्न्योस्संबन्धनियमे प्रमाणम् । भूयोदर्शनेन पश्चात्तस्य निरुपाधिकत्वनिश्चयः, यत्नेनान्विष्यमाणेऽप्युपाधेरदर्शनात् । अतो भूयोदर्शनमपि सप्रयोजनमिति गुरुभिरुक्तम् । यत्र तु प्रथमप्रतिपन्नस्संयोगः पश्चात्कदाचिद्विहन्यते यथाग्निना सह धूमस्य, तस्य देशकालावच्छेदः पश्चादनुप्रवेश्यत इति तस्य स्वाभाविकत्वाभावेन औपाधिकत्वम् । उपाधिश्चार्द्रेन्धनसंबन्धः, तन्मात्रानुबन्धित्वाद्धूमस्य । इत्थमन्यत्रापि यत्र व्याप्यव्यापकसंबन्धो येन येन प्रमाणेन निरुपाधिकः प्रतीयते तत्रतत्र तदेव प्रमाणमिति सिद्धम् ॥ तदुक्तम्—

> **यः कश्चिद्येन यस्येह संबन्धो निरुपाधिकः ।**
> **प्रत्यक्षादिप्रमासिद्धस्स तस्य गमको मतः ॥**

इति । तत्राचार्यमतपक्षपातिनः केचिदाहुः—वह्निधूमौ संयुक्तौ संयुज्येते संयोक्ष्येते इति संयोगस्यैव भावार्थस्य कालत्रयावच्छेदः प्रतीयते । न चावश्यमिदंशब्देनैव कालो निर्देष्टव्यः, लडादिप्रत्ययैरपि सुतरां तन्निर्देशादिति । मा भूद्वा देशकालाभ्यामवच्छेदावगमस्संयोगस्य । तथापि स्वाभाविकत्वमप्रामाणिकम्, न ह्यवच्छेदानवगतिमात्रेण तदवधारणं सिध्यति, सतोऽप्यनवगतिसंभवात् । तस्मादनिश्चिते चावच्छेदासंभवे न स्वाभाविकत्वं सिध्यति ॥

अत्रोच्यते—व्याप्तिग्राहकप्रमाणेन हि संयोगस्य कालावच्छेदो न प्रतीयत इति वदामः, न त्वनुशासनसिद्धलडादिमुखेन संयोगस्य कालावच्छेदं निवारयामः, तस्य तु व्याप्तिप्रतीतावनुपयोगात् । तद्ग्राहकप्रमाणमुखेनैव तदवच्छेदस्य तद्ग्रहणोपयोगात् । नाप्यवच्छेदानवगतिमात्रेण स्वाभाविकत्वं ब्रूमः । भूयोदर्शनस्यापि सहायत्वात् । तेन हि निरुपाधिकत्वनिर्णये स्वाभाविकत्वं पारिशेष्यात्सुलभम् ।

किं च संयोगादयो हि वस्तुतो द्रव्यपरतन्त्रस्वभावाः, द्रव्यं तु स्वतन्त्रम् । अतस्तस्यैवावच्छेद्यत्वमौत्सर्गिकम् । यत्र त्वविवादस्संभवति तत्र विशेषणभूतस्संयोगादिरपि कालेनावच्छिद्यते । यथा वह्नेर्धूमसंबन्धः । अत एव तस्यौपाधिकत्वमिति ॥

तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम् । स्वयमनुसंहितया सामग्र्या अनुमानोत्पत्तिः स्वार्थम् । परप्रयुक्तवाक्योद्बोधितया तु परार्थम् ॥

तच्च वाक्यं त्र्यवयवम् । ते च प्रतिज्ञाहेतूदाहरणानि । तत्र प्रतिज्ञा तु प्रथमं प्रयोक्तव्या । हेतूदाहरणयोस्तु न प्रयोगक्रमनियमः । एकदेशदर्शनपूर्वकमपि सम्बन्ध-

यमप्रमाणं सम्प्रत्युद्बोधकम् । तथा संबन्धनियमस्मरणपूर्वकमर्थान्तरदर्शनमेव हेतुपक्ष-योरुक्तवन्यतरप्रयोगेणापि साध्यसिद्धेरुभयोपादानं व्यर्थमिति मीमांसकाः । निगमनम-प्यनर्थकमेव, यथोदितहेतुबललब्धत्वात्साध्यस्य । तथा वैधर्म्यदृष्टान्तोऽपि नानुमा-नाङ्गम्। साध्यधर्मसंबन्धनियमबलेन हेतोर्गमकत्वम् । तच्च साधर्म्यदृष्टान्तेनैव सम-र्थितम्, कृतं वैधर्म्यदृष्टान्तेन । अत एव तत्प्रतिपादनपरं कैश्चित्प्रयुज्यमानं वैधर्म्यो-दाहरणवाक्यमपि व्यर्थमेव । तर्हि विकल्पस्स्यादिति चेन्न, अतुल्योपायत्वात् । एकस्य ऋजुत्वात्, इतरस्य वक्रत्वात् । तुल्यप्रकारयोरेव हि विकल्पः । अत एव केवल-व्यतिरेक्यनुमानं केचिन्मीमांसका न सहन्ते । साध्यसाधनसंबन्धस्यान्वयदृष्टान्ते प्रसिद्ध-त्वात्, तस्य चात्राभावात् ॥

प्रमाणफलविभागस्तु प्रत्यक्षवत्कर्तव्यः । यदा अनुमितिरनुमानमिति व्युत्पत्त्या साध्यज्ञानं प्रमाणं, तदा तदनन्तरभाविनी हानादिबुद्धिः फलम् । यदा त्वनुमीयतेऽ-नेनेत्यनुमानमिति करणाश्रयः तदानीं न ज्ञानादीनां करणत्वं, वैवक्षिकत्वात्करणभा-वस्य । सर्वत्र लैङ्गिकविषया प्रतीतिरेव फलम् । तत्र लौकिकवचसामनुमानवेषेण प्रामाण्यं शब्दप्रमाणावसरे वक्ष्यामः । अतस्सर्वं प्रकरणपञ्चिकायां प्रमाणपारायणे अनुमानपरिच्छेदे बहुशो वर्णितम् । प्रतितन्त्रसिद्धान्तमात्रप्रवृत्तत्वान्नास्माकं प्रपञ्चा-धिकारः ॥

---

## ॥ अथोपमानम् ॥

सदृशदर्शनात्तत्सदृशवस्त्वन्तरगतसादृश्यज्ञानमुपमानम् । यथा पूर्वदृष्टगोः पुरुषस्य वने गवयं तत्सदृशं पश्यतो यद्गोगतगवयप्रतियोगिकसादृश्यज्ञानं अनेन सदृशी मदीया गौरिति तदुपमानम् । नेदं प्रत्यक्षं, चक्षुस्सन्निकर्षातिवर्तिन्यां गवि जायमान-त्वात् । न स्मृतिः, पूर्वमेतादृशाननुभवात्, तत्पूर्वकत्वात्स्मृतेः । गोमात्रज्ञानं तु स्मृति-रेव । नाप्यनुमानम्, व्याप्तितत्प्रतिसन्धानपूर्वकत्वाभावात् । सदृशदर्शनादित्यनेनैन्द्रियक-सादृश्यज्ञानस्योपमानत्वनिरासः । अवशिष्टेन च सादृश्यदर्शनानुबन्धिनः भूयोवयवसा-मान्यज्ञानादेः सादृश्यस्य च पृथक्त्वान्तरत्वं प्रमेयनिरूपणावसरे भविष्यति ॥

## ॥ अथार्थापत्तिः ॥

अर्थान्तरकल्पनायामसत्यां योऽर्थान्तरमनुपपन्नं कुरुते तत्रार्थापत्तिः प्रवर्तते ।

यथा 'जीवन् देवदत्तो गृहे नास्ति' इत्यत्र गृहाभावे दृष्टे श्रुते वा तत्रासति बहिर्भावकल्पने गृहाभावो जीवनमनुपपन्नं कुर्वन् बहिर्भावं कल्पयति। अनुपपत्तिश्चात्र संदेहः। तथाहि– अकल्पिते बहिर्भावे गृहाभावे च निर्णीते 'जीवति वा न वा' इति संदेह एव भवति। कल्पिते तु तस्मिन् स प्रशाम्यति। अर्थसंदेहापादकोऽर्थः प्रमाणम्। बहिर्भावकल्पना प्रमा। कल्प्यमानोऽर्थः प्रमेयम्। यद्वा प्रमितिः प्रमाणमिति व्युत्पत्त्या कल्पना प्रमाणम्। तदनन्तरभावि विशिष्टज्ञानं फलमिति॥

ननु गृहाभावदर्शनाद्बहिर्भावकल्पनमनुमानमेव। तथाहि– देवदत्तो बहिरस्ति गृहे अविद्यमानत्वे सति जीवनवत्त्वात्, यो जीवंस्तत्र नास्ति स ततोऽन्यत्रास्ति, यथाहम्, इति चेत्? मैवं–जीवनांशे संदिग्धासंदिग्धत्वात्। ननु जीवनं प्रमाणान्तरप्रतिपन्नं कथं संदिग्धम्? सत्यं, प्रमिते हि वस्तुनि पूर्वप्रतिपन्नरूपाद्रूपान्तरप्राप्तौ संदेहो भवत्येव। पूर्वं हि जीवनं गृहसंबद्धमेव प्रमितम्। संप्रति तत्संबन्धे निवृत्ते बहिर्देशसंबन्धे चाकल्पिते जीवने संदेहो भवत्येव। 'पूर्वं जीवन् देवदत्तो गृह एव दृष्टः। इदानीं स गृहे नास्ति जीवति वा न वा' इति। तर्हि बहिर्देशसंबन्धकल्पनादसंदिग्धं जीवनं लिंगमिति चेत् (एवं चेत्) अनुमेयाभावः। बहिर्देशसंबन्ध एव अनुमित्सितः। स तु निर्णीतश्चेदनुमेयं नावशिष्यते। केवलगृहाभावोऽपि न लिङ्गं, मृतजनिष्यमाणयोर्व्यभिचारात्। अतोऽत्र नानुमानावकाशः। अतस्संदेहापादकोऽर्थोऽर्थापत्तिरिति स्थितम्। न हि धूमादिकं कस्यचिदर्थस्य संशयापादनद्वारेण लिङ्गमिति ततो वैषम्यम्। तथा पीनो देवदत्तो दिवा न भुङ्क्त इत्यत्राकल्पिते रात्रिभोजने पीनता× रात्रिभोजने प्रमाणम्॥ तदुक्तम्—

> तत्संदेहव्युदासाय कल्पना या प्रवर्तते।
> संदेहापादकादर्थादर्थापत्तिरसौ स्मृता॥

इति। अन्ये पुनरेवं मेनिरे—यस्मिन्नकल्पिते योऽर्थः प्रतीतोऽपि पूर्वपरिदृष्टस्वरूपपरिवृत्त्या संशयरूपामनुपपत्तिं भजते सोऽर्थः स्वगतसंदेहव्युदासाय अर्थान्तरकल्पनायां प्रमाणम्। यथा पूर्वोक्तं जीवनसामान्यं भोजनमात्रं च। धूमाद्यनुमानं नैतादृशं, एकत्र निश्चितकरणमपरत्र संदिग्धमिति ततो वैषम्यम्॥ तदुक्तम्—

---

× पीनता भोजनसंशयं कुर्वाणा इति स्यात्

यत्कल्पनां विना योऽर्थः प्रतीतोऽप्येति संशयम् ।
तेन तत्कल्पनामेके त्वर्थापत्तिं प्रचक्षते ॥

इति ॥ केचित्तु गृहाभाव एवान्यथाऽनुपपद्यमानस्सन् बहिर्भावकल्पनायां प्रमाणमित्याहुः । तदयुक्तम् । तत्र गृहाभावस्य काऽनुपपत्तिः ? असति बहिस्सत्त्वे स्वस्याभाव इति चेत्, तर्हि साध्याभावे हेत्वभावरूपो व्यतिरेक एव । स च हेतुसद्भावे साध्यसद्भावलक्षणेनान्वयेनावगम्यत इत्यन्वयव्यतिरेकमुखेन प्रवर्तमानत्वादिदमनुमानमेवेति नार्थापत्तेः पृथक्प्रामाण्यसंभवः । अतस्संदेहापादकोऽर्थस्तेनापादितसंदेहोऽर्थो वाऽर्थापत्तिरिति स्थितम् ॥

अत्र केचित्—यत्रार्थानुपपत्तिः प्रमाणान्तरप्रतिपन्ना तत्रार्थान्तरमेव कल्प्यमिति सा दृष्टार्थापत्तिः । यत्र तु वाक्यप्रतिपन्ना 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति तत्र 'रात्रौ भुङ्क्ते' इति वाक्यमेव कल्प्यम् । 'शाब्दी ह्याकाङ्क्षा शब्देनैव परिपूर्यते' इति न्यायात् । अतस्सा श्रुतार्थापत्तिरिति अर्थापत्तिद्वैविध्यमाहुः । तदयुक्तम् । अत्राप्यर्थस्यैव कल्पयितुमुचितत्वात् । यस्मिन्नकल्पितेऽनुपपत्तिः कल्पिते तु तच्छान्तिः अतः तदेव कल्प्यं अन्यथा ह्यव्युत्पन्नपदवाक्यप्रयोगे तु तच्छान्तिरिति तदेव कल्प्यमिति । तर्हि पदार्थज्ञानादेव तच्छान्तिरिति अर्थपरिकल्पनमेवोचितम् । उभयपरिकल्पने गौरवं च । दृष्टार्थापत्तावर्थस्यैव कल्प्यत्वं दृष्टमिति तदेवात्रापि कल्प्यताम् । शाब्दी ह्याकाङ्क्षा कल्पितार्थान्वयेनापि शाम्यति, तस्यैवाकांक्षितत्वात् । अत एव 'द्वारम्' इत्यादौ अध्याहारस्थले बुद्धिस्थेनैव संवरणादिनाऽन्विताभिधानं, न तु 'संव्रियताम्' इत्यध्याहृतेन, शब्देन, बुद्धिसन्निहितेनाप्यन्विताभिधानोपपत्तेः । जिज्ञासावशेन क्वचित्परं प्रति शब्दप्रयोगसंभवः, न तु नियमेन ॥

नन्वर्थकल्पनाय प्रवृत्तार्थापत्तिः तस्यार्थस्य सविकल्पकज्ञानविषयत्वात् । तेषां च शब्दपुरस्सरत्वात्तद्वाचकशब्दपर्यन्तं व्याप्रियत इतिचेन्न । सर्वत्र सविकल्पकप्रत्यक्षे स्वार्थानुमाने च तदभावात् । न हि ते शब्दपर्यन्तं व्याप्रियेते, बधिरमूकतिरश्चां तदसंभवात् । किंत्वर्थमात्रे । किं च सर्वत्र सविकल्पकज्ञानेषु हि स शब्दश्रवणविपरिवर्ती, न तु प्रमेयम् । अर्थदर्शनाद्धि वाचकशब्दस्स्मर्यत इति विचारासहमेतत् । शब्दं तु प्रमाणं स्वावसरे निरूपयिष्यामः । तस्मादर्थापत्त्या सह पञ्च प्रमाणानि । एतत्सर्वं प्रमाणपारायणे प्रपञ्चितम् । वेदार्थविचारानुपयोगान्नास्माकं तत्रातिनिर्बन्धः ॥

## ॥ अभावप्रमाणनिरासः ॥

अभावाख्यं षष्ठं प्रमाणमभावग्रहणाय कैश्चिदङ्गीक्रियते । अभावस्य भावविलक्षणतया भावरूपप्रमाणेन तद्ग्रहणाशक्तेः पञ्चप्रमाणानुत्पत्तिरूपमभावरूपं प्रमाणमेषितव्यमिति । तदयुक्तं, प्रमेयाभावात् । ननु कथं तदभावः ? ' इह भूतले घटो नास्ति ' इति तावदस्ति प्रतीतिः । सा किं भूतलस्वरूपविषया, अथ कैवल्ये-तद्विषया ? अत्रापि चिन्तनीयम् । किमिदं कैवल्यं नामेति, किं भूतलस्वरूपं अथ तद्धर्म इति ? आद्यः, घटवत्यपि प्रसङ्गात् । न द्वितीयः, पूर्वोक्तदोषानतिवृत्तेः । द्वितीये त्वभावाङ्गीकारः । किं च कण्टकादिविरहिणि भूतलादौ निश्शङ्कः पदन्यासादिव्यवहारस्तावत्किं भूतलमात्रपरिच्छेदनिबन्धनः ? अथ केवलभूतलपरिच्छेदनिबन्धनः ? तत्रापि विकल्पनीयं, कैवल्यं परिच्छेदस्य विशेषणं, उत भूतलस्येति ? नाद्यः, कण्टकादियोगिन्यपि प्रसङ्गात् । द्वितीये तु केवलपरिच्छेदो नाम यथाकथंचित्परिच्छेदः । तथा च सूक्ष्मकण्टकादिष्वनवगतेष्वपि निश्शङ्कव्यवहारः स्यात् । प्रयत्नपूर्विका तज्जिज्ञासा च निह्नुता स्यात् । द्वितीये त्वभावाख्यं प्रमेयमङ्गीकृतं स्यात् । तदानीं हि तत्परिच्छेदनिबन्धनो व्यवहारो युक्तः । प्रतियोगिपरामर्शार्थं जिज्ञासा च । किं चाभावानङ्गीकारे नास्तिशब्दो निरर्थकः स्यात् । शशादीनां शृङ्गानुमानं स्यात् । इदं रजतमित्यस्य बाधश्च न स्यात् । तदङ्गीकारे तु सार्थकः । बाधितविषयत्वं चानुमानस्य युक्तम् । बाधश्च युक्तः । तस्मादस्ति भावविलक्षणं तत्त्वान्तरमिति ॥

इदमिदानीं विचारयामः—किं तद्भावप्रमाणबोध्यं, उताभावबोध्यमिति ? तत्र न तावत्प्रत्यक्षबोध्यं इन्द्रियव्यापारोपरमेऽप्यवगतेः । कथमयं निर्णयः ? अभावस्तावत्क्वचित्कस्यचित्प्रत्येतव्यः इह तन्नेति । ततश्च यत्र प्रत्येतव्यः तद्ग्रहण एवेन्द्रियमुपरमते । नाभावग्रहणे, तेन सह संबन्धाभावात् । तस्मादभावप्रमाणगोचरो भावः । कथमयं विभागोऽवसितः ? उच्यते—गृहादिस्वरूपमनुभूय देशान्तरगतः पुरुषः वस्त्वन्तराभावप्रश्ने सति भावान्तरं जिज्ञासमानस्य प्रष्टुस्तथैव नास्तीत्युत्तरं प्रतिपद्यते ॥ तदुक्तम्—

> स्वरूपमात्रं दृष्ट्वा च पश्चात्किंचित्स्मरन्नपि ।
> तत्रान्यनास्तितां पृष्टः तथैव प्रतिपद्यते ॥

इति ॥ न च तत्रेन्द्रियव्यापारस्समस्ति, देशविप्रकर्षात् । तस्मादभावप्रतीति-र्नैन्द्रियिकी । तेन प्रत्यक्षोऽभावो न शक्यो वक्तुम् । तत्र पूर्वमेवाभावो गृहीतः पश्चाद्बुद्धिस्थ इति च न वक्तुं शक्यते, प्रतियोगिनस्तदानीं बुद्धावनारोहात् । न च निर्विकल्पकेन पूर्वमनुभूतः पश्चात्सविकल्पकेन स्मर्यत इति वाच्यम् । नियमेन प्रतियोगिसम्मितवेषस्याभावस्य सर्वदा निर्विकल्पकागोचरत्वात् । तत्संभवे वा स्मृतिरपि तादृशी स्यात्, यथानुभवं स्मृतेः ॥

नाप्यनुमानं लिङ्गाभावात् । न ह्यत्र अभावव्याप्तं लिङ्गमुपलभ्यते । उपमा-नार्थापत्योरनवसर एव । तस्मात्तत्रतत्र भावप्रमाणपञ्चकानुत्पत्तिरेवाभावावगमे प्रमाणम् ॥

ननु प्रमाणानुत्पत्तिर्लिङ्गतया प्रमाणं स्यात् ? न । उभयोरप्यभावात्मकत्वेन भावग्राहकप्रमाणेन तयोर्व्याप्तिग्रहासंभवात् । तस्मादभावाख्यं प्रमाणं स्वमहिम्नैव स्व-विषयमुपस्थापयति ॥

केचित्तु दृश्याभावस्थले दृश्यानुपलब्धिः प्रमाणम् । अन्यत्र तु भावरूपम-भावरूपं यथायोग्यं प्रमाणं स्यादित्याहुः । तस्मात्प्रमेयसद्भावादभावाख्यं प्रमाणमङ्गी-कर्तव्यमिति ॥

अत्रोच्यते—द्विविधा तावद्भूतलादीनामवगतिः, एका संसृष्टविषया, अपरा तदेकविषया । साऽपि द्विधा–प्रतियोगिन्यदृश्ये दृश्ये च । तत्र दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिस्सैव तस्य प्रतियोगिनोऽभाव इत्युच्यते । न हि तदेकविषयबुद्धि-मात्रमभावः, विशेषानवगमात्, किन्तु दृश्ये प्रतियोगिनि । ततश्च यस्मिन् प्रतियो-गिनि दृश्ये या तदेकविषया बुद्धिः सा तदभाव इति विशेषव्यपदेशलाभः । तेनेह भूतले घटो नास्तीत्युक्ते घटे दृश्ये भूतलमात्रं नाबोधीत्युक्तं भवति ॥

ननु किमिदं प्रतियोगिनि दृश्यत्वं नाम ? अन्यत्र प्रमितस्य अन्यत्र प्रसक्ति-रिति त्वन्मतस्थितिः । अन्यथा अप्रसक्तप्रतिषेधापातात् । सैवास्तु दृश्यता । अस्माकं तु ज्ञानविशेषः । योऽप्यभावाख्यं तत्वमङ्गीकुरुते । तेनापि तदेकविषयां बुद्धिमङ्गी-कृत्यैवाभावप्रतीतिरिष्यते, अधिकरणप्रतीतेः प्रतियोगिप्रसक्तेश्च तत्प्रतीतिकारणत्वात् । तत्र कीदृशस्याधिकरणस्य प्रतीतिस्तत्कारणमिति चिन्तनीयम् । किं सद्वितीयस्य, अथाभावविशिष्टस्य, अथानपेक्षस्यैकाकिन, इति ? नाद्यः, घटघटितेऽप्यधिकरणे

प्रतीते तदभावप्रतीतिप्रसङ्गात् । न द्वितीयः, आत्माश्रयात् । अभावं हि प्रतीत्य तद्विशिष्टमधिकरणं बुद्ध्वा पश्चात्तस्य एवाभावः प्रतिपत्तव्य इत्यभावावगतिरेवाभावावगमकारणं यतः, अतोऽप्रतीतेऽप्यभावे स्वरूपमात्रप्रतीतिरङ्गीकार्येति । तृतीयः पक्षः परिशिष्यते—तावतैवाभावव्यवहारोपपत्तौ किमतिरिक्ततत्त्वान्तराभ्युपगमेन ? नीलपीतादिवत्तादृशतत्त्वान्तरानुपलम्भात् । 'वायुपरमाणवो नीरूपाः, सलिलपरमाणवो गन्धशून्याः' इत्यादिष्वनुमानात्मिका तदेकविषया बुद्धिः । अयं भावः— चतुर्विधेष्वभावेषु यस्य यस्याभावस्य यद्यदधिकरणं त्वन्मते, दृश्ये प्रतियोगिनि तत्तदधिकरणमात्रगोचरा बुद्धिरेवास्माकमभाव इति । नास्तिशब्दश्च तादृशाधिकरणमात्रवाचकः । नञ्शब्दश्च स्वरूपमात्रपर इति हि प्राभाकराः । निश्शङ्कपदन्यासादिव्यवहारोऽपि तदेकविषयबुद्धिमात्रनिमित्तकः । जिज्ञासाऽपि दृश्यस्यापत्तये युक्तैव । तथा प्रत्यक्षबाधो लिङ्गबाधश्च तदेकविषयबुद्धिमात्रनिमित्तको व्यवहारबाधमात्रनिमित्तको वा । शुक्तिकायां रजतव्यवहारो लिङ्गाभासे लिङ्गव्यवहारश्च बाध्यते । न हि ज्ञानं बाध्यते । किन्तु व्यवहार एवेति प्राभाकराः ॥

ननु यत्राभावोऽपरो नास्ति तर्हि यत्र प्राक्संसर्गबुद्धिरासीत् तत्र कथं तदेकविषया बुद्धिराविर्भवति । त्वन्मते वा कथं तत्राभावप्रतीतिः ? मुद्गराभिघातादिवशादिति चेत्, तत एवास्माकमपि तदेकविषया बुद्धिर्जन्यते । एतेन देशान्तरं नीतस्य घटस्य तत्र स्थितिरेव तदेकविषयबुद्धिनिमित्तमिति व्याख्यातम् ।

ननु यत्राभावोऽपरो नास्ति तर्हि मुद्गराभिघातादिना कपालमालोत्पत्तौ यत्र तदेकविषया बुद्धिस्तत्र पश्चात्संसृष्टविषयाऽपि न स्यात् । त्वन्मते वा किमिति न स्यात् ? तत्र भावविनाशादिति चेत्, अस्माकमपि तथा स्यात् । तर्ह्यभावाङ्गीकार इति चेत्, वयमपि विनाशमङ्गीकुर्मः, न तु भावान्तरोदय एव । भाव एव स्वेकाकी सद्वितीयश्चेति द्वयीमवस्थां लभते । तत्रैकाकी भावोदय एव विनाशशब्दवाच्यः । त्वन्मतेऽपि तादृश्यवस्थाऽवश्याङ्गीकार्येत्यधस्तादुक्तम् । एवं निरन्वयविनाशिष्वपि बुद्धिप्रभृतिषु धर्मिणः स्वरूपावस्थानमेव भावान्तरोदयोऽवगन्तव्यः ।

किञ्च प्रमाणान्तरवादिनोऽप्यनुपलब्धिलक्षणा प्रमाणानुत्पत्तिर्न सत्तयाऽभावबोधिका, स्वापादौ सर्वाभावप्रतीतिप्रसङ्गात् । किञ्च कस्य चिद्वस्तुनः कुत्र चित्पूर्वमवगतस्य पुनस्तस्मिन्नेव देशे दृश्यमानस्य पूर्वमननकालीनोऽभावोऽवगतो

इदमिह पूर्वं नासीदिति । ततश्च तस्य दर्शनाद्दर्शनाभावो निवृत्त इति प्राक्कालीन एव दर्शनाभावोऽनुसन्धीयमानोऽभावप्रतीतिकारणमिति वक्तव्यम् । ततश्च विदितैवानुपलब्धिरभावप्रतीतिकारणमिति वक्तव्यम् । तथा चानुपलब्धेरप्यभावरूपतया तज्ज्ञानमप्यनुपलभ्यमित्यनवस्था । तदेकविषया बुद्धिश्चेत्स्वयं प्रकाशतया न प्रमाणान्तरापेक्षणी । तस्मात्प्रमाणानवक्लृप्तिरपि न । तन्महिम्ना प्रमेयावक्लृप्तिरिति पञ्चैव प्रमाणानीति सिद्धम् । शाब्दं स्वावसरे वक्ष्यामः । एतत्सर्वममृतकलायां शालिकानाथेन समर्थितम् ॥

इति श्रीमद्रामानुजाचार्यविरचिते तन्त्ररहस्ये
प्रमाणपरिच्छेदः प्रथमः ॥



## ॥ अथ प्रमेयपरिच्छेदः ॥

### ॥ अथ प्रमेयवर्गो निरूप्यते ॥

तत्र चाभ्युपगमसिद्धान्तन्यायेन कणादतन्त्रसिद्ध एव प्रमेयवर्गोऽङ्गीक्रियते, तस्य तत्प्रतिपादनार्थं प्रवृत्तत्वात् । न तु पृथगत्र व्युत्पाद्यते । तत्राप्यनभिमतांशो निराक्रियते । विशेषांशस्तु व्युत्पाद्यते । तथाहि—

द्रव्यगुणकर्मसामान्यसमवायशक्तिसंख्यासादृश्यान्यष्टौ पदार्थाः ॥

तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव ॥

तत्र वायुः प्रत्यक्ष एव, न तु तद्गतस्पर्श एव प्रत्यक्षः, शीतोष्णस्पर्शभेदेऽपि 'स एव वायुः' इति प्रत्यभिज्ञानात् । नन्वनुष्णाशीतस्पर्शो वायुः, स कथं तद्भेदे प्रत्यभिज्ञायते (न) स्फटिकवदुपपत्तिः । यथा हि शुक्लोऽपि स्फटिकः तत्तदौपाधिकगुणसंबन्धेऽपि 'योऽयं शुक्लस्स एवायं रक्तः' इत्याश्रयांशे प्रत्यभिज्ञायते ॥

तत्र पृथिव्येव शरीरारम्भिका, नेतराणि भूतानि, तदनुपलम्भात् । इदानीन्तनस्त्रीपुंसपरम्परायाश्च तथा दर्शनात् । विपरीतमसदेव । तच्च जरायुजाण्डजस्वेदजभेदेन त्रिप्रकारमेव । उद्भिज्जं तु वृक्षादिकं न शरीरं, भोगानुपलम्भात् । तदायतनं हि तत्प्रयोजकम् । यदपि—

> श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः ॥
> शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ॥

इति वचनं तद्विधिपरतन्त्रतया न स्वतन्त्रम्, 'यजमानः पशुः, आदित्यो यूपः' इतिवत् प्रमाणविरोधात् ।

तथा आत्मा च न मानसप्रत्यक्षः, कर्मकर्तृभावविरोधात् । 'मां जानामि' इति व्यपदेशस्तु भाक्तः । किन्तु विषयेषु प्रकाशमानेषु ज्ञानाश्रयतया प्रकाशते । सर्वाऽपि संवित् त्रितयप्रकाशिका । अवश्यं ज्ञातुरनुभवो मेयानुभवेष्वनुवर्तते । अन्यथा स्वपरसंवेद्ययोरनतिशयः स्यात् । विषयैस्सहोपलम्भनियमश्च एवं सत्युपपन्नः । न ह्यात्मा विषयाननुविद्धोऽवभासते । विषयाश्च बोद्धर्यनवभासमाने भासन्ते । तस्मात्सैव

संविद्विषये प्रमाणम् । सैव पुरुषं विषयीकरोतीति, तत्संवित्तिफलभागित्वेऽपि पुरुषस्य न कर्मता, कर्तृतैव । परसमवेतक्रियाफलशालि कर्मेति कर्मज्ञाः । अतो न मानसप्रत्यक्षः ॥

तमो नाम द्रव्यान्तरं न भवति । अन्धानामिव केवलं नीलिमाभिमानः । अपवारितालोकं केवलं भूभागादिकमेव छाया ॥

गुणास्तु रूपरसगन्धस्पर्शपरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माः ॥

एतेषां नित्यानित्यविभागस्तथोत्पत्तिस्थितिविनाशप्रकारश्च कणादतन्त्रसिद्धः। वेदार्थविचारानुपयोगान्नास्माकं तत्राभिनिवेशः ॥

कर्म तु नित्यानुमेयम् । संयोगविभागपरम्परया हि गतिरनुमीयते । देशाद्देशान्तरप्राप्त्या सूर्यगत्यनुमानं भाष्ये प्रपञ्चितम् । इदमेव कर्म स्वतस्साध्यतया साक्षाद्विधेयम् । सिद्धस्वभावयोस्तु द्रव्यगुणयोस्तदुपरागात् । स्वतः 'दध्ना जुहोति' इति होमोपरक्ततयैव दधि विधीयते । तथा 'अरुणया क्रीणाति' इत्यारुण्यमपि ॥

जातिस्तु प्रत्यक्षद्रव्यमात्रे वर्तते, नान्यत्र, अनुपलम्भात् । इत्थं हि तस्याः प्रतीतिः—प्रत्यक्षेषु घटपटादिद्रव्येषु तत्तदाश्रयग्राहकैरिन्द्रियैः संयुक्तसमवायाद्गृह्यमाणा नानाव्यक्तिषु स्वयमेकाकारतया ताभ्योऽत्यन्तविलक्षणा प्रथमपिण्डग्रहणे स्वरूपमात्रेण प्रतीयमाना द्वितीयादिपिण्डग्रहणेषु सैवेयमिति पूर्वाकारावमर्शेन प्रत्यभिज्ञायमाना पामरपरीक्षकाविशेषेण प्रकाशते । तदुक्तम्—

जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरा ।
पूर्वाकारावमर्शेन प्रभाकरगुरोर्मता ॥

इति ॥ अनुवृत्ता हि जातिः । अनुवृत्तिश्च तद्धर्मः । अतः प्रथमपिण्डग्रहणसमये पिण्डान्तरानुसन्धानशून्यतया तदनुवृत्तिर्न प्रतीयते । द्वितीयादिग्रहणेषु तु तत्संभवात्सा प्रतीयते । यत्र हि भेदमध्यवस्यत एव पुंसोऽभेदज्ञानं तत्रानुपपत्त्या जातिः कल्प्यते । जातिप्रत्यभिज्ञा च तत्रैव स्यात् । अत एवैकवर्तिकावर्तिनीषु क्षणविध्वंसिनीषु बह्वीषु ज्वालासु ज्वालात्वं न प्रत्यभिज्ञागोचरम् । तत्र शुक्तिरजतवद्भेदाग्रहेण व्यक्तिभेदानुपलम्भात् । केचित्तु जातिं व्यक्तिभ्यो भिन्नामभिन्नां चोररीचक्रुः, तदनुपपन्नम्, विरोधात् । न चोपलम्भबलेन तदविरोधः, तस्यैवासंभवात् । भिन्नबुद्धिबोध्यं हि वस्तु

भिन्नं, अभिन्नबुद्धिबोध्यमभिन्नमिति लौकिकाः। तत्र वस्तुद्वयप्रतीतिसमये जातिर्व्यक्तितो भिन्नाभिन्नवेषेण व्यक्तिर्वा जातितस्तथा प्रतीयेत। ततो द्विरवभासोऽयं स्यात्। नैवं दृश्यते। तस्माद्भेद एव तयोः। सत्यपि तस्मिन् 'इह कुण्डे बदरम्' इतिवत् इह गवि गोत्वमिति नेह प्रत्ययः। सर्वं हि रूपं रूपिणमन्तरेण न प्रतीयते। तेन समानेन्द्रियग्राह्यतया जातिरपि व्यक्तिप्रतीत्यनुप्रवेशिनी। कर्मणि त्वनुमेये व्यक्तिप्रतीत्यनुप्रवेशाभावाद्भवत्येवेह प्रत्ययः॥

केचित्तु द्रव्यादित्रिके सत्सदिति प्रत्ययानुवृत्तेः सत्ताख्यसामान्यमाहुः, तदसत्। न च नानाजातीयेषु सर्षपमहीधरादिषु रूपादिषु कर्मसु वा निर्निमेषं निरीक्षमाणस्य पूर्वाकारानुकारिणी सत्ताबुद्धिरुदेति। प्रयोगानुवृत्तिस्तु पाचकादिशब्दवत् केवलमुपाधिनिबन्धना। उपाधिश्च प्रमाणसंबन्धयोग्यत्वम्। किंचोत्तरत्रिके सच्छब्दप्रयोगः केवलमुपाधिनिबन्धन इति भवदभ्युपगमः सर्वत्र तथैव स्यात्। अनेनैव न्यायेन प्रत्यक्षाप्रत्यक्षनिष्ठा द्रव्यत्वपृथिवीत्वगुणत्वशब्दत्वकर्मत्वादयोऽपि निराकृताः। अनुगताकारापरिस्फुरणात्। प्रयोगानुवृत्तिस्त्वौपाधिकी। उपाधयश्च तत्तल्लक्षणान्येव। तानि च जातिव्यञ्जकतया त्वयाऽप्यङ्गीकृतानि॥

ननु गोत्ववत्सत्ताद्रव्यत्वादीनि झडिति सर्वाविशेषेण न परिस्फुरन्ति। किन्तु शास्त्रमुखेन शिक्षितधियां व्यञ्जकानुसन्धाने सतीति चेत्, हन्त सकलजनमनोनिह्नवः, यदेकमेव वस्तु प्रतिपत्त्यव्यवस्थया प्रतीयत इति। तथा च गोत्वमपि सास्नादिमत्यां विप्रतिपन्ननिराकरणायोगात्। अनेनैव न्यायेन ब्राह्मणत्वक्षत्रियत्वादिकमपि न निर्वहति। तर्हि तत्तद्वर्णव्यवस्थया प्रवृत्तानि शास्त्राणि न स्युरिति चेत्। मैवम्—सन्ति चानादौ संसारप्रवाहे लोकप्रमाणसिद्धा ब्राह्मणादिशब्दवाच्या अनिदंप्रथमाः काश्चन स्त्रीपुंसव्यक्तयः, तत्प्रभवत्वमेव ब्राह्मणत्वादिकम्। तन्मात्रगोचरं च शास्त्रम्। तच्च व्यञ्जकतया त्वदङ्गीकृतमिति न किंचिदनुपपन्नम्। एतत्सर्वं जातिनिर्णयाख्ये प्रकरणे प्रपञ्चितम्॥

वैशेषिकास्तु—समानगुणकर्मजातिषु नित्यद्रव्येषु परस्परव्यावृत्तिनिमित्तं विशेषाख्यं धर्ममाहुः, तदनुपपन्नं, पृथक्त्वेनैव व्यावृत्तिसिद्धेः। ननु पृथक्त्वस्य सर्वद्रव्यसाधारणतया नित्यद्रव्येषु ततो नात्यन्तव्यावृत्तिसिद्धिरिति चेत्। मैवं—तेषु तस्या एवासंभवात्। तद्दर्शिनां तत्संभव इति चेत्, तेषामेवाभावात्। न ह्ययोरयं वस्तु

साक्षात्क्रियते । ननु परमाणवः कस्य चित्प्रत्यक्षाः, मेयत्वाद्घटवदिति तत्संभव इति चेत् । निरवयवद्रव्यत्वेन बाह्यप्रत्यक्षत्वस्य, मूर्तत्वेन मानसप्रत्यक्षत्वस्य, चासिद्धिः । तस्माद्विशेषाः कथासु परिशिष्यन्ते ॥

अयुतसिद्धयोस्संबन्धस्समवायः । स च नित्ययोर्नित्यः । अनित्ययोर्नित्यानित्ययोश्चानित्यः । यतः कार्यमुत्पद्यते तत एव तदुत्पत्तिरपि । नित्यानुमेयश्च, प्रत्यक्षेणानुपलम्भात् ।

सर्वभावेष्वतीन्द्रिया शक्तिः कार्येणानुमीयते । तथाहि–यथाभूतादेव वह्नेर्दाहो दृष्टः, मणिमन्त्रौषधिप्रयोगे सति तथाभूतादेव वह्नेर्दाहो न दृश्यते । अतो मणिमन्त्रादिप्रतिबन्धनीयं तद्विनाश्यं वा किञ्चिदतीन्द्रियं शक्तिसामर्थ्यादिपदवाच्यमभिधेयम् । तस्य च स्वाश्रयकारणादुत्पत्तिः । कार्यानुत्पत्तौ द्वयी गतिः, अभिभवो वा विनाशो वा । यत्र पुनः कार्यं न जन्यते तत्र विनाशः । यत्र तु जन्म तत्राभिभव इति । ननु मणिमन्त्रादिसन्निधानादेव कार्यानुदयः स्यात् । (न) कारणवैगुण्ये कार्योदयविघातासंभवात् । तर्हि तदप्रयोगोऽपि तदुत्पत्तिनिमित्तमिति चेत्, न । प्रयोगस्य प्रतिबन्धकतया तदभावस्य केवलं तन्निवृत्तिरूपत्वमेव, न तु निमित्तत्वम् । कार्योत्पत्तिस्तु निवृत्तप्रतिबन्धायाश्शक्तेरेव । किञ्च क्वचित्प्रयोगेऽपि प्रतीकारवशेन कार्योत्पत्तिदर्शनान्न तदभावस्य निमित्तत्वम् । एवमपि निमित्तत्वमङ्गीकृत्य शक्तिरपह्नूयते चेत्, स्पर्शवद्द्रव्यसंयोगेन पतनप्रतिबन्धे तदभावस्यैव तन्निमित्तत्वात् गुरुत्वं दत्तजलाञ्जलि स्यात् । असति प्रतिबन्धे गुरुत्वात्पतनमिति हि स्वन्मतस्थितिः । तदुक्तं—'संयोगप्रयत्नाभावे गुरुत्वात्पतनम्' इति । प्रयोगस्तु—मणिमन्त्रादिप्रयुक्तो वह्निस्स्वकार्योत्पत्तौ परिदृश्यमानरूपातिरिक्तरूपान्तरापेक्षः, सत्यपि तस्मिन्कार्यानुत्पादकत्वात्, यद्यस्मिन्सत्यपि नोत्पादयति तत्तदतिरिक्तापेक्षं, यथा केवलं तवेति । किञ्च शक्त्यनङ्गीकारे कार्यार्थिभिर्नियतकारणोपादानं न स्यात् । तदङ्गीकारे तु यच्छक्तं तदेवोपादीयते, नान्यदिति नियमसिद्धिरिति ॥

तथा संख्याऽपि पृथक्तत्वान्तरम् । तथाहि–न द्रव्यं गुणादिषु वृत्तेः, गन्धो द्विविधस्स्पर्शस्त्रिविध इति । तत्र वृत्तिरौपचारिकीति चेत्, न । मुख्ये बाधकाभावात् । गुणत्वमेव बाधकमिति चेत्, न । तस्यासिद्धेः । न गुणः, बहुषु वृत्तेः, घटत्वादिवत् । न कर्म, प्रत्यक्षत्वात्, तत्प्रतीतिवैलक्षण्याच्च । न सामान्यं, अनित्यत्वात् । तस्मात्पृथक्तत्वान्तरम् ॥

तथा सादृश्यमपि न द्रव्यं, गुणकर्मणोरपि वृत्तेः। गन्धादयो हि परस्परसदृशाः प्रतिभान्ति। गन्धो गन्धान्तरेण, तथा रूपम्, तथा क्रिया। अत एव न गुणकर्मणी। नापि सामान्यम्, अनुवृत्तप्रत्ययनिमित्तत्वाभावात्। ननु भूयोवयवसामान्यं सादृश्यमिति चेत्, न। प्रतीतिवैलक्षण्यात्। सादृश्यं हि सप्रतियोगिकमेव प्रतीयते 'अयमनेन सदृशः' इति। तत्तु तद्व्यञ्जकम्। तत्रैव सादृश्यप्रतीतेः। तस्मात्पृथक्तत्त्वान्तरम्॥

सर्वं प्रमेयजातं भोक्तृभोगायतनभोगसाधनभोग्यभुक्तिषु पञ्चसु कोशेषु परिसमाप्यते॥ आत्मा भोक्ता। भोगायतनं शरीरम्। भोगसाधनानीन्द्रियाणि। भोग्याश्चान्तरा बाह्या इति द्विविधाः। बाह्याः पृथिव्यादयः, आन्तरास्सुखादयः। भुक्तिस्सुखदुःखानुभवः॥

मोक्षोऽपि सकलदुःखोच्छेदरूपतया विलक्षणः पुरुषार्थः। तत्प्राप्तिस्तु 'आत्मा वाऽरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, तरति शोकमात्मवित्' इत्यादिश्रुतिविहितादात्मज्ञानात्। विनश्वरविविधपुरुषार्थविरक्तस्सकलदुःखध्वंसकामः तदधिकारी। इतरस्तु कर्माधिकारी। तमधिकृत्यैव सर्वाणि कर्मशास्त्राणि प्रवर्तन्ते, मोक्षशास्त्राणि तु तदितरपुरुषमिति प्रमेयपरिज्ञानमुभयथाऽपि सप्रयोजनम्॥

इति श्रीमद्रामानुजाचार्यविरचिते तन्त्ररहस्ये
प्रमेयपरिच्छेदो द्वितीयः॥



## ॥ शाब्दप्रमाणम् ॥

इत्थं मानमेयमितयो निरूपिताः । अथ शाब्दं प्रमाणं निरूप्यते । संबन्धग्रहणवशेनार्थप्रत्यायकं पदजातं शाब्दम् । तदेव प्रत्यक्षाद्यसन्निकृष्टार्थे शास्त्रम् । तदुक्तम्—

'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्'

इति । शब्दज्ञानसापेक्षादात्ममनस्सन्निकर्षादसन्निकृष्टार्थविषयं ज्ञानं तच्छास्त्रं नाम प्रमाणम् । प्रमाणान्तरसन्निकृष्टार्थविषयं तु लौकिकं वचनम् । तत्त्वनुमानरूपम् । अतो न शास्त्रम् । अनुमानरूपता तु वक्ष्यते । शब्दार्थयोस्तावत्प्रत्याय्यप्रत्यायकभावलक्षणस्संबन्धः, वाच्यवाचकभाव इति यावत् । स चापौरुषेयः ॥ तदुक्तम्—

'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ इति ।

औत्पत्तिकः—स्वाभाविकोऽपौरुषेयो नित्य इत्यर्थः । वर्णानां नित्यत्वादर्थानां च प्रवाहरूपेण नित्यत्वात्संबन्धस्यापौरुषेयत्वम् ।

ननु कथं वर्णा नित्याः ? उच्चारणमात्रापवर्गिणः श्रूयन्ते । तथाहि—इदं तावदविवादम्—तत्तद्वर्णोच्चारणापेक्षया पुरुषप्रयत्नप्रेरितः कोष्ठयो वायुर्नाभिमण्डलदेशादुद्गच्छन्नुरःकण्ठशिरोजिह्वामूलदन्तनासिकोष्ठप्रदेशेषु संयुक्तः श्रोतुश्श्रोत्रप्रदेशेन संयुज्यते, तदनु तत्रत्यस्तिमितवायुरपक्रामति । तदनन्तरं च वर्णा उपलभ्यन्ते । तथा कर्णशष्कुल्यवच्छिन्नमाकाशमेव श्रोत्रम् । तद्गुणश्च शब्दः । तेन च समवायाद्गृह्यत इति । इदमिदानीं विचार्यते,—किमुत्पादकः प्रयत्नः, उताभिव्यञ्जक इति, ? न तावदभिव्यञ्जकत्वं, आवरणापनयनेन वा किंचिदभिव्यज्यते, इन्द्रियसंस्कारेण वा, विषयसंस्कारेण वा ? न तावच्छ्रोत्रशब्दयोः कुड्यादिरावरणं संभवति, तत्समवायस्य यावत्प्रतिसंबन्धिभावात् । इन्द्रियसंस्कारोऽपि कोष्ठयेन वायुना तदाप्यायनं तत्संयोगमात्रं वा ? द्वयमप्युत्पत्तिपक्षेऽप्यनुकूलम् । शब्दस्याकाशधर्मत्वात् । आकाशस्यैव श्रोत्रत्वात् । विषयसंस्कारोऽपि विषयधर्म एव । स च न संभवति । न हि कोष्ठयस्य वायोराकाशधर्मेण संबन्धः । कथं चित्संभवेऽप्युत्पत्तिपक्षसाधारण एव । परम्परया संबन्धस्याप्युत्पादकत्वदर्शनात् । किं च प्रयत्नस्याभिव्यञ्जकत्वे एकेनैव प्रयत्नेन सर्व-

4

शब्दाभिव्यक्तिप्रसक्तिः, । समानेन्द्रियग्राह्याणां व्यञ्जकभेदानपेक्षत्वनियमात् । न हि प्रदीपादिव्यङ्ग्या घटादयः तन्नानात्वमपेक्षन्ते । प्रयत्नस्याभिव्यञ्जकत्वे तत्तारतम्यानुविधायिता च न स्यात् । मन्दे तस्मिन्मन्दस्तीव्रे च तीव्र इति ॥

न हि प्रदीपादितारतम्ये तदभिव्यङ्ग्यतारतम्यं दृश्यते, किं चैक एव ककारादिस्तत्तद्वक्तृभेदान्नानाभूतश्च दृश्यते, तच्चोत्पत्तिपक्ष एव युक्तम् । अभिव्यक्तिपक्षे प्राच्यश्शब्दः प्रतीच्य इति व्यवहारो न स्यात् । उत्पत्तिपक्षे तूत्पादकदेशेन स्यात् ततश्चैवं प्रयोगः—अनित्यश्शब्दः, अनभिव्यञ्जकप्रयत्नानन्तरीयकत्वात्, घटवदिति । तस्मात्ताल्वादिस्थानैस्तत्तत्प्रयत्नसंयोगादुत्पन्नः शब्दः शब्दान्तरारम्भक्रमेण श्रोत्रदेशे शब्दमारभते । स तावच्छ्रोत्रसमवायाच्छ्रूयत इत्युक्तम् ॥

अत्रोच्यते—वर्णात्मकेषु शब्देषु सर्वत्र 'स एवायं गकारः, तदेवेदं पदं' इति प्रत्यभिज्ञा तावद्दृश्यते । न सा सादृश्याद्भेदाग्रहनिबंधना, नेदमिति बाधादर्शनात् । ज्वालाप्रत्यभिज्ञायां तु भेदस्सिद्ध एव, तत्कारणसंभवात् । तथाहि—ज्वाला तावदवयविद्रव्यम् । तस्याश्च प्रभा गृहोदरव्यापिनी । न हि प्रथमप्ररोपितज्वालाया विशरणमन्तरेण प्रभाप्रचारः संभवति । तस्मात्प्रथमप्ररोपिता नष्टा, द्वितिया त्वन्यादृशीति तत्र सादृश्यनिबन्धनस्तद्ग्रहः, अत्र तु युक्तिमुखेनापि न तादृशी बाधा दृश्यते । अतस्स्पष्टे तद्ग्रहे तत्तद्वर्णगोचरस्य प्रयत्नस्य व्यञ्जकत्वमेव युक्तम् । परकीयमनुमानं च विशेषणासिद्धम् । कोष्ठ्यस्य वायोः श्रोत्रप्रदेशसंयोग एव संस्कारः, । स्तिमितवाय्वपगमस्तु नान्तरीयकः, तत्सहकारी वा, । ततश्च तत्संस्कृतं श्रोत्रं शब्दं गृह्णाति, गतिमत्त्वाच्च वायोः तत्संयोगविरामे शब्दोपलम्भविच्छेदः, प्रतिवर्णं व्यञ्जकभेदाच्च न सर्वशब्दोपलम्भप्रसक्तिः, उत्पत्तिपक्षेऽपि कारकभेदोऽङ्गीकृत एव, स एवास्माकं व्यञ्जकभेदः, ततश्चैवं प्रयोगः—शब्दः प्रयत्नाभिव्यङ्ग्यः, तदनुत्पाद्यत्वे सति तदनन्तरमुपलब्धेः, यो यदनुत्पाद्यत्वे सति यदनन्तरमुपलभ्यते स तदभिव्यङ्ग्यः, यथा प्रदीपानन्तरमुपलभ्यमानो घटः । न चात्र विशेषणासिद्धिः । तद्ग्रहणबलेन व्यञ्जकत्वसिद्धेः । योऽप्ययं तर्कः—यदि वर्णाः प्रयत्नाभिव्यङ्ग्या स्स्युः, तर्हि प्रयत्नभेदानपेक्षिणस्स्युः । समानेन्द्रियग्राह्याणां प्रयत्नभेदानपेक्षित्वनियमात्, अपेक्ष्यते च भेदः । तस्मात्तदभिव्यङ्ग्या न स्युरिति, सोऽपि प्रशिथिलमूल एव, शुक्लनीलादिरूपेषु समानेन्द्रियग्राह्येषु स्फुटास्फुटालोकव्यङ्ग्यत्वदर्शनात्, तथाल्पेनैव लालाजलेन शर्करामाधुर्यमभिव्यज्यते, सक्तुपृथुकयोस्तु

अनल्पेन, तथा कुङ्कुमगन्धो गोघृतेनैव, मुस्तागन्धस्तु तैलेन, निदाघसमयनिर्दग्धपृथिवी गन्धस्तु जलेनैवेति । तीव्रमन्दादितारतम्यमपि प्रयत्नस्याभिव्यञ्जकत्वेऽपि तत्तारतम्याद्युज्यते । प्रदीपप्रकाशतारतम्याद्रूपोपलब्धितारतम्यवत्, तथैकस्यैव वर्णस्य तत्तद्वक्तृभेदेन नानाभावोपलब्धिरपि तत्तद्वक्तृसमुत्थस्य परस्परनिरपेक्षस्य प्रत्येकं विलक्षणं श्रोत्रसंस्कारमारभमाणस्याभिव्यञ्जकस्य कोष्ठ्यस्य वायोर्नानात्वादुपपन्ना । प्रत्यभिज्ञाबलेन स्थायित्वस्य तदैक्यस्य चोपपादितत्वात् । तिमिरभिन्नाभिर्नेत्रवृत्तिभिश्च चन्द्रे नानात्वोपलब्धिवत् । प्राच्यादिव्यपदेशोऽपि व्यञ्जकवक्तृदेशापेक्षयोपपन्नः । ह्रस्वदीर्घप्लुतप्रतीतिरपि अभिव्यञ्जकवृद्धिह्रासप्रयुक्ता । अनुवातं दूरे शब्दोपलब्धिः । प्रतिवातं तदनुपलब्धिरपि व्यञ्जकपक्ष एवोपपन्ना । ताभ्यां दूरं कोष्ठ्यवायुप्रेरणात्तन्निरोधाच्च ॥

ननु शब्दे प्रत्यभिज्ञा न संभवति, तदभिव्यक्तेः क्षणिकत्वात् । तथाहि— स्फटिकादौ प्रथमप्रतीते तदनु संस्कारोद्भेदे तत्सहकृतं चक्षुस्तदनन्तरं 'स एवायम्' इति गृह्णाति । इह तु वर्णाभिव्यक्तिः क्षणिका । तया च संस्कारोद्बोधे श्रोत्रनित्यत्वेऽपि व्यञ्जकव्यापारोपरमात्पश्चात्प्रत्यभिज्ञा नोदेतुमर्हतीति । उच्यते—कार्यानुरोधेन हि कारणकल्पना । अत्र तु नाभिव्यक्तिस्संस्कारोद्बोधिका, किन्त्वदृष्टादिकारणवशात्तदुद्बोधे सति प्रथमाभिव्यक्तिरेव प्रत्यभिज्ञानरूपा परिणमते । यथा—महान्धकारे क्षणिकसमुन्मेषिसौदामिनीसंपातमात्राच्चिरपरिचिते वस्तुनि प्रथमत एव प्रत्यभिज्ञा जन्यते । तस्माद्वर्णा नित्याः । एतच्च सर्वं न्यायशुद्धौ प्रपञ्चितम् ॥

इत्थं वर्णानां नित्यत्वात् अर्थस्य च प्रवाहरूपेण नित्यत्वात्तत्संबन्धस्यानादितयापौरुषेयत्वम् । तथाहि-इदानीन्तनवृद्धव्यवहारे हीदानीन्तनव्युत्पित्सूनां शक्तिग्रहः । तथा पूर्वव्युत्पित्सूनां पूर्ववृद्धव्यवहारे । तथा पूर्वतराणां पूर्वतरे इत्यनिदम्प्रथमे संस्कारमण्डले शब्दार्थपरम्पराया अनादित्वात्तत्संबन्धस्याप्यनादित्वम् । किं च शब्दानित्यत्वे व्युत्पत्तिरेव न स्यात् । वृद्धव्यवहारे हि शक्तिग्रहः । स च भूयोभूयः प्रयोगदर्शने स्यात् वर्णानां, तत्तत्पदस्यार्थपरिहारेण स्वस्वार्थावधारणशक्तिरावापोद्वापाभ्यां भूयोभूयः प्रयोगदर्शनादिना । न ह्युच्चारणमात्रापवर्गिणः शब्दस्य पुनः पुनः-प्रयोगदर्शनं संभवति । तच्च शब्दनित्यत्वे स्यात् इति तन्नित्यत्वप्रसाधनं व्युत्पत्त्यर्थतयापि सप्रयोजनं स्यात् ।

अयं मनोरथः, यदि संस्कारस्यानादिता स्यात् । तत्तु न सिध्यति ।

तथाहि—कृत्स्नकार्यकलापे युगपदुपसंहृते सति सर्गादावादिस्सर्वज्ञस्सर्वशक्तिस्सर्वेश्वरः पुरुषोत्तमः कृपावान् सर्गव्यवहारसमर्थानयोनिजान् पुरुषविशेषान्मनसा निर्माय भोग्य-भोगोपकरणभोगस्थानप्रविभक्तं भूतभौतिकं संघातं च सृष्ट्वा तेषुतेष्वर्थेषु अस्य शब्दस्यायमर्थ इति सङ्केत्य वेदानप्याविष्कृत्य तेभ्यः पुरुषेभ्यस्समुपदिदेशेति सकलप्रमाणसिद्धम्। तस्मात्संबन्धः पौरुषेय इति ॥

नैतत्सारम्—स्यातां नाम क्रमेण कार्यवर्गस्य सृष्टिविनाशौ। यौगपद्ये तु प्रमाणं न पश्यामः। वैपरीत्ये तु विमतः कालो न कृत्स्नकार्यध्वंसवान्, कालत्वात्, संप्रति-पन्नकालवत् इति। यद्वा विमतो घटध्वंसः सर्वदा घटान्तर समानकालीनः, ध्वंसत्वात्, ध्वंसान्तरवत्। किंच कृत्स्नकार्यध्वंसे सर्वात्मगतादृष्टध्वंसात् पुनस्सृष्टिवैषम्यं न स्यात्। " इदं वा अग्रे नैव किंचनासीत्, न द्यौरासीत्, न पृथिवी नान्तरिक्षम्" तथा ' सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयं, तत्सृष्ट्वा तदेवानुप्राविशत्, " इत्यादिवाक्यानि स्वर्थवादतया विधिशेषभूतानि, न तु स्वातन्त्र्येणार्थप्रतिपादनसमर्थानि, कृत्स्नस्यापि वेदस्य अनुष्ठेयार्थतात्पर्यात्। तच्च व्युत्पत्तिसिद्धमिति वक्ष्यते। तथा सर्वज्ञपुरुषसद्भावे च ' क्षित्यादिकं सकर्तृकं कार्यत्वात्। घटवत्, ' इत्यनुमानं न प्रमाणम्, कार्यत्वस्य शरीरिकर्तृकत्वेन व्याप्तेः, शरीरिणश्च सार्वज्ञासंभवात्, अशरी-रिणश्च कारणाधिष्ठानाशक्तेः कर्तृत्वासंभवात्, इदानीन्तनपुरुषपरम्परायाश्च योनिजत्व-दर्शनेन अयोनिजपुरुषसद्भावोऽप्यसंभावित एवेति मीमांसकानामभिमानः। एतत्सर्वं विमलाञ्जननाम्नि प्रकरणेऽभिहितम् ॥

ननु देवदत्तादिपदेषु संकेतनिबन्धनार्थप्रतीतिदर्शनाद्गवादिपदेष्वपि तथा स्यात्। ततश्चापौरुषेयत्वमबद्धमिति चेत्, मैवम्—अत्र संकेतस्य प्रत्यक्षसिद्धत्वात्, अन्यत्र वृद्धव्यवहारादेव व्युत्पत्तेस्तदभावात्। ननु देवदत्तादिपदेष्वपि कदाचित्संकेतादर्थप्रतीति-र्दृश्यत इति चेत्, न। अनियतो हि तत्र संकेतः, व्युत्पत्तिस्तु नियता। तस्मादे-कत्र शक्तिग्रहनिबन्धनं वाचकत्वम्, अन्यत्र तु कदाचिद्व्यवहारतो वाचकत्वग्रहेऽपि संकेतनिबन्धनम्। वाचकत्वप्रतीतिस्तु भेदाग्रहात्। संकेतात्पूर्वं गवादिपदवद्वाचकत्वा-प्रतीतिः।

ननु संबन्धस्यापौरुषेयत्वे प्रथमश्रुताच्छब्दादविशेषेण सर्वेषामर्थप्रतीतिस्स्यात्, न स्यात्, व्युत्पत्तेरपि हेतुत्वात्। तस्माद्वर्णा नित्याः, संबन्धश्चापौरुषेय इति स्थि-तम्। तद्ग्रहणं च वाचकत्वशक्तिग्रहात्। स च वृद्धव्यवहारादिति वक्ष्यते ॥

ननु कथं पदेभ्यः पदार्थप्रतीतिः वाक्यार्थप्रतीतिर्वा । तत्र शब्दतत्त्वविदो वैयाकरणाः प्राहुः—क्रमिकैराशुतरतिरोहितैर्वर्णैः प्रत्येकं यौगपद्येन च पदार्थप्रतीतेर्वाक्यार्थप्रतीतेश्चासंभवात्तत्तद्वर्णाभिव्यङ्ग्यं प्रत्यस्तमितवर्णविभागं पदवाक्यशब्दवाच्यं स्फोटाख्यं शब्दतत्त्वं तन्मूलमेषितव्यम् । तथाहि—न चैकैकवर्णग्रहणेऽर्थप्रतीतिः, अतिप्रसङ्गात् । न च युगपद्ग्रहणं, आशुतरतिरोधानात् । ततो नियतक्रमैः कतिपयैर्वर्णैः पदाभिव्यक्तिः । तथा तादृशैरनेकैर्वर्णैर्वाक्याभिव्यक्तिः । तत एव पदार्थवाक्यार्थविभागश्चोपपन्न इति ॥

अपरे तु प्रत्यस्तमितपदवाक्यविभागमखण्डं शब्दतत्त्वमेकमेव । तत्र पदवाक्यविभागस्तु काल्पनिक इति प्रतिपन्नाः ॥

तच्चातीन्द्रियमर्थप्रतीत्यनुपपत्तिकल्प्यमित्येके ॥ अपरे तु श्रोत्रग्राह्यमिति ।

पूर्वत्र वास्तवपदपदार्थव्युत्पत्तिर्वास्तववाक्यार्थव्युत्पत्तिश्च सहकारिणी । उत्तरत्र काल्पनिकी पदतदर्थवाक्यतदर्थव्युत्पत्तिः । अन्यथा सर्वाविशेषेणार्थप्रतीतिप्रसङ्गात् ।

किं च " वन–नव–नदी–दीन " इत्यादिषु वर्णभेदेऽपि पदान्यत्वं प्रतीयते । ततस्तदतिरिक्तं पदम् । न च वाच्यं, वर्णा एव पदम्, नदीदीनेत्यादिषु क्रमभेदेन पदबुद्धिभेद इति, तेषां सर्वगतत्वनित्यत्वाभ्यां देशकालक्रमासंभवात् । किं चानेकेषु वर्णेषु एकं पदं एकं वाक्यमिति व्यपदेशोऽपि वर्णान्यत्वे प्रमाणम् । किं च वर्णानां वाचकत्वे क्रमभेदे वक्तृभेदे विलम्बोच्चारणे चार्थप्रत्ययस्स्यादिति, नैतत्सारम्—यत्नेनान्वेषणेऽपि नानावर्णव्यतिरेकेण निर्भागशब्दतत्त्वानुपलम्भात् । यस्त्वेकं पदमेकं वाक्यमिति व्यपदेशः, सोऽप्यनेकेषु अर्थैक्योपाधिनिबन्धनः । दृश्यते हि बहूनामप्यौपाधिकमेकत्वम् । यथा ' सेना वनं राजसूयः ' इति । अत एवार्थैकत्वमजानतां नास्त्येकत्वपरामर्शः । यदि ह्यनौपाधिकं शब्दतत्त्वं स्यात्तर्हि संहितापाठमात्रेण व्युत्पन्नानामितरेषां च प्रकाशेत । ननु व्युत्पत्तिरपि सहकारिणीति नातिप्रसङ्ग इति चेत्, हंत, स्वानुभवविसंवादः, न हि व्युत्पन्नः पुमानेभिर्वर्णैरिदं शब्दतत्त्वमभिव्यज्यत इति प्रत्येति । किं च यावद्भिर्वर्णैश्शब्दतत्त्वमभिव्यक्तं प्रतिनियतार्थप्रत्यायकं तावतामेव वाचकत्वसंभवेऽतिरिक्तकल्पनं गौरवपराहतम् । नदीदीनेत्यादिष्वपि बुद्धिभेदः क्रमभेद निबन्धनः । तथाहि—उच्चारणक्रमानुरोधात्प्रतिवर्णाभिव्यक्ति भिन्ना एव बुद्धयो जायन्ते । प्रतिवर्णोपलम्भप्रभावितभावनाख्यसंस्कारक्रमवशाच्च विलक्षणाः स्मृतयः । तत्क्रमाद्वर्णा अपि क्रमवन्त इव भान्ति । तस्मादेकवक्त्रोच्चारणापादितनैरन्तर्या आनु-

पूर्वीविशेषशालिनस्स्वरविशेषभाजो वर्णा एव पदम्। तत एवार्थप्रत्ययः। न च युगपद्ग्रहणासंभवः, क्रमेण श्रुतानामपि तेषां तेनैव क्रमेण पश्चात्स्मृतिविषयत्वसंभवात्। दृश्यते हि क्रमानुभूतेष्वपि युगपदनुसन्धानं 'पञ्च प्रयाजा मयानुष्ठिताः, गोदावर्यां महानद्यां शतवारं स्नातोऽहम्' इति च अयमर्थस्स्वसिद्धान्तोपन्यासममये प्रपञ्चयिष्यते।

अतीन्द्रियशब्दकल्पनमप्यनुपपन्नम्। अर्थप्रतीतेरन्यथासिद्धत्वात्। अतिप्रसङ्गश्च तस्य नित्यत्वे सर्वार्थप्रतीतिप्रसङ्गात्। अनित्वे च तत्कारणं दुर्निरूपम्। वर्णानां च कारणत्वे तदुत्पत्तिर्व्यर्था, उक्तेन मार्गेण तैरेवार्थप्रतीत्युपपत्तेः। अभिव्यञ्जकत्वे तु प्रत्यक्षत्वापातः। किंच वृद्धव्यवहारे आवापोद्वापाभ्यां हि शक्तिग्रहाद्व्युत्पत्तिः। ततश्च यस्य पदस्य आवापे यस्यार्थभागस्यावापः यदुद्वापे चोद्वापः तत्रैव तस्य व्युत्पत्तिरुक्ता अखण्डशब्दतत्वावादे कस्य कुत्र व्युत्पत्तिः? ननु तत्रापि पदविभागं परिकल्प्य तत्र तस्य व्युत्पत्तिरिति चेत्, न, प्रतिपत्तिगौरवात्। नियतक्रमा वर्णा एव हि पदमित्युक्तम्। किं चानेनैव न्यायेन वाक्यार्थप्रतीत्युपपत्तौ तत्र वाक्यं परिकल्प्य तत्र तस्य व्युत्पत्तिर्वक्तव्या। तत्रापि भूयान् प्रतिपत्तौ गौरवक्लेश इति प्रत्यक्षतोऽनुमानतो वा न वर्णातिरिक्तशब्दतत्वसंभव इति॥

अपरे तु वर्णानां प्रत्येकं ( पदार्थ ) वाचकत्वेऽतिप्रसङ्गात् आशुतरविनाशित्वेन युगपद्ग्रहणाभावाच्च पूर्वपूर्ववर्णानुभवजनितसंस्कारसचिवोऽन्त्यो वर्णः पदार्थवाचकः। तथा पूर्वपदार्थानुभवजनितसंस्कारसचिवमन्त्यं पदं वाक्यार्थवाचकम्। अत्रापि वास्तवपदपदार्थव्युत्पत्तिस्सहकारिणीति प्रतिपेदिरे। अयं च संस्कारस्स्मृतिहेतोस्संस्काराद्विलक्षणः। तस्य च स्मृतिहेतुत्वात्, अस्य चानुभवनिमित्तत्वात् इति, तदप्यनुपपन्नं, उक्तेन न्यायेनार्थप्रतीतेरन्यथासिद्धत्वात् युगपद्ग्रहणस्योपपादितत्वाच्च अत्र यद्यपि पदपदार्थविभागो वास्तवः, तथापि व्युत्पत्तिर्यत्नोपपाद्या, अन्त्यवर्णस्य पदत्वाभावात्। तथा वाक्यार्थव्युत्पत्तिरपि, अन्त्यपदस्य वाक्यत्वाभावात्, पक्षद्वयेऽप्युभयोरनियतत्वाच्च॥

अत्र नव्यास्तु पदैरभिहिताः स्वार्थाः स्मारिता वा पदार्था अकाङ्क्षादियुक्ता वाक्यार्थं गमयन्तीति, तदप्यनुपपन्नं, शक्तिकल्पनागौरवात्। तथाहि— अभिधानपक्षे पदानां स्वस्वार्थाभिधानशक्तिः पदार्थानां वाक्यार्थबोधनशक्तिः। तथा शब्दादन्यतः प्रमाणात्प्रतीतानां पदार्थानां वाक्यार्थबोधकत्वादर्शनात्प्रतिपा-

दितानां च तद्दर्शनात्पदानि पदार्थेषु वाक्यार्थबोधनशक्तिमादधति । तेषां तदुत्पादन-शक्तिरपरेति । ननु प्रमाणान्तरप्रतिपन्नानामपि संसर्गबोधनसामर्थ्यं दृश्यते । तथाहि—येन नाम प्रत्यक्षेणाज्ञाताश्रयं श्वैत्यं प्रतिपन्नं हेषारवेणाज्ञातरूपोऽश्वोऽनुमितः खुरपुटनिष्पेषशब्देन चाज्ञातकर्तृकं गमनमनुमितं तस्य श्वेतोऽश्वो धावतीति संसर्गबोधो दृश्यते ॥ तदुक्तम्—

'पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः ।
खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः ।
दृष्टा वाक्यविनिर्मुक्ता——' इति ॥

आरूपमव्यक्तरूपम् । अव्यक्ताश्रयमिति यावत्, मैवम—तादृशस्य पुंस-स्संसर्गप्रतीतिरेव नोदेति, किं तु श्वेतं किंचिद्वस्तु दृश्यते । अश्वेन भाव्यं गच्छतान्येन केन चिदित्येतावन्मात्रम् । अथाभ्यासपाटवात्पदनिष्पेषशब्दमश्वसंबन्धिनमवगच्छति । तदानुमानादेव धावत्यश्व इति धीः । अथ श्वैत्यस्य अनुमिताश्वाश्रयत्वमध्यवस्यति, तदाप्यश्वादन्यत्र न संभावितमिति परिशेषादेव श्वेतोऽश्व इति धीः । तथा श्वैत्यस्यानु-मिताश्रयस्य च धावनसमानाश्रयत्वमनुमिनोति चेत्, श्वेतोऽश्वो धावतीति धीः । अन्यथा नेति यत्किंचिदेतत् । अपि च यद्यत्र पदार्थावगमादेव परस्परान्वयावगमः, तदा तस्य कस्मिन् प्रमाणेऽन्तर्भावः, ? न शब्दे, तत्प्रयोगाभावात् । प्रमाणान्तराभ्यु-पगमे तु शब्दस्योच्छेदः । तस्मात्पदप्रतिपादितानां पदार्थानामन्यत्रादृष्टं वाक्यार्थबो-धनसामर्थ्यं कल्पनीयम् । पदानामपि तदाधानशक्तिरिति शक्तित्रयकल्पनागौरवम् ॥

ननु पदार्थानां संसर्गबोधनशक्तिस्वीकारे खलु गौरवम् । अनन्वितावस्थोऽ-भिहितोऽन्वितावस्थां लक्षयति, अवस्थावस्थावतोर्हि संबन्धस्तावदस्त्येव, तदाहुर्वार्ति-ककारपादाः—

वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैव हि लक्ष्यते । इति ।

तदयुक्तमित्यन्ये, नेयं लक्षणा, स्वार्थापरित्यागात् । तत्परित्यागेन हि गंगादिषु लक्षणा दृष्टेति । ते हि मीमांसाभ्यासवैकल्येनैवमाहुः, न हि सर्वत्र लक्षणायां स्वार्थस्त्यज्यते । तथाहि—

लोके छत्रिणो गच्छन्तीति छत्रिशब्देन छत्र्यच्छत्रिसमुदायो लक्ष्यते । छत्रिशब्दार्थश्च न त्यज्यते । तथा वेदेऽपि चातुर्मास्येषु वैश्वदेवेन यजेतेति वैश्व-देवशब्देन वैश्वदेवावैश्वदेवगणो लक्ष्यते । स्वार्थश्च न त्यज्यते । अत एव जहदजहल्ल-

क्षणेति तद्वैविध्यं परैरङ्गीकृतम् । अतोऽन्यथा दूषणमुच्यते, वाच्यस्य गङ्गाशब्दार्थस्य वाक्यार्थेऽनन्वयात्खलु लक्षणा, गामानयेत्यादौ तु गोपदार्थस्यान्वयादयुक्तैव सा । किं च वाक्यार्थमात्रस्य लक्ष्यत्वमनुपपन्नम्, संबन्धानुपपत्तिपरामर्शमन्तरेण पदार्थवदेव झडिति प्रतीतेः । ननु तर्हि स्मारकत्वपक्षे न गौरवम् । पदस्मारिताः पदार्थाः वाक्यार्थं गमयेयुः । तथाहि—पदश्रवणे व्युत्पत्तिदशायां प्रतिसंबन्धितयानुभूताः पदार्थाः स्मर्यन्ते । अस्ति च संबन्ध्यन्तरदर्शने सबन्ध्यन्तरस्मरणम् । तदुक्तम्—

पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते ॥ इति ॥

अभ्यधिकाभावात्—स्मारकत्वातिरिक्ताभिधायकत्वाभावादिति । तदयुक्तम् । वाक्यार्थस्याशाब्दत्वप्रसङ्गात् । वाक्यार्थोऽपि पदार्थलक्ष्य', न तु शक्त्याभिधीयत इति । ननु यथा पदैः पदार्थाः स्मर्यन्ते तथा तैरपि पदानि संबन्धस्याविशेषात् । ततश्च स्मृतैः पदैरन्वयो बोध्यत इति शाब्दत्वमिति चेन्नैवम्—

प्रथमं वाचकश्रवणं, तदनु वाच्यस्मरणम्, पुनरपि वाचकस्मरणं, तैस्तत्स्मरणमित्यव्यवस्थाप्रसङ्गात् ॥

प्रभाकरास्तु—पदान्येव वाक्यम् । पदार्थ एव वाक्यार्थः । तत्र पदान्येव प्रमाणम् । अर्थान्तरान्वितस्वार्थे पदानां व्युत्पत्तेरित्याहुः । तथाहि—इत्थं तावत्प्रथमं लोके व्युत्पत्तिप्रकारः, —उत्तमवृद्धस्तावत् देवदत्त गामानयेति वाक्यं प्रयुङ्क्ते, तदनु मध्यमवृद्धः प्रवर्तते । तदानीं तटस्थो व्युत्पित्सुरेवं मन्यते—अस्य प्रवृत्तिर्ज्ञानपूर्विका, प्रवृत्तित्वात्, मदीयप्रवृत्तिवत् । तच्च ज्ञानं वाक्यजन्यं, तदनन्तरभावित्वादिति । इत्थं भूयोभूयः प्रयोगदर्शनेन प्रथमं तावद्वाक्यस्य वाक्यार्थे सम्मुग्धा व्युत्पत्तिर्जायते अस्य वाक्यस्य गवानयनमर्थ इति । पश्चात्कदाचिदश्वमानयेति वाक्यप्रयोगे तथैव प्रवृत्तौ अश्वपदावापे तदर्थान्वयाद्गोपदोद्वापे तदर्थानन्वयादावापोद्वापाभ्यामश्वपदस्यार्थान्तरान्विते हयार्थे गोपदस्य च तादृशे सास्नादिमदर्थे प्रत्येकं व्युत्पत्तिर्जायते । इत्थं भूयोभूयः प्रयोगदर्शनाद्व्युत्पन्नस्य पुंसः पूर्वं ततश्शब्दार्थमप्रतियतः पुनरेषा विचिकित्सा जायते, यदि प्रत्यायकस्ततो ममापि पूर्वमेव प्रत्याययेत् । अथाप्रत्यायकस्ततो वृद्धमपि न प्रत्याययेदिति । एवं विचिकित्सतः पुनरेषा विचिकित्सा जायते—नूनमस्ति कश्चिद्वृद्धस्य विशेषः, यतोऽयमवबुध्यतेऽहं तु नेति । कोऽसौ विशेष इति निर्णयमिच्छतः पुनर्वृद्धव्यवहारे तेभ्यश्शब्देभ्य स्स्वयमर्थावगमात् प्रत्यायकत्वमेव विशेषः । स च वाचकस्वशक्तिग्रहाधीनः । तद्ग्रहश्च

 

वृद्धव्यवहारे। स च ममेतः पूर्वं नासीत्, वृद्धस्य त्वासीदिति निर्धारणा जायते। इत्थं ममेव पूर्ववृद्धस्य तत्पूर्ववृद्धपरम्परायाश्चेत्यनादित्वादपौरुषेयत्वेन स्वाभाविकत्वमपि शब्दार्थसंबन्धस्यावसीयते। तस्माच्छब्दानां प्रत्यायकत्वं स्वाभाविकम्। तच्च व्युत्पत्त्यपेक्षं, न पुनस्संकेतकृतम्। सा च शक्तिग्रहाधीना। तद्ग्रहश्च प्रयोज्यवृद्धव्यवहारे। स च विशिष्टार्थज्ञानमूलः। तच्च ज्ञानं वाचकशक्तिमूलमिति विशिष्टविषयैव शक्तिरुन्नीयते। आवापोद्वापौ चान्वितगोचरौ। ततश्च गामानयेत्युक्ते गोपदमानयेत्यन्वितस्वार्थबोधकम्। एवमानयेति पदमपि। ततश्चान्विते शक्तिग्रहादन्विताभिधायित्वं पदानां सिद्धम्। तथा मध्यमवृद्धप्रवृत्तेः कार्यज्ञानपूर्वकत्वात्तस्य च शब्दमूलत्वात् सर्वेषामपि पदानां कार्यपरत्वमवगन्तव्यम्। तच्चावापोद्वापाभ्यां साक्षाल्लिङादिप्रत्ययस्य, इतरेषां तु परम्परया प्रकृत्यंशस्येव प्रत्ययांशस्यापि ताभ्यां शक्तिग्रहात्। एतच्चोपरिष्टात्स्पष्टीभविष्यति ॥

नन्वन्विताभिधानं न सिध्यति, प्रतियोगिनामानन्त्येन तदन्विते शक्तिग्रहासंभवात्। सामान्येनान्विताभिधानं च नाशङ्कनीयं, वाक्येभ्योऽविशेषान्वयावगमात्। तथापि स्वरूपमात्राभिधानेनापि वाक्यार्थप्रतीत्युपपत्तौ अन्विताभिधानाश्रयणे शक्तिकल्पनागौरवाच्च। किं पदान्तराभिहितेनान्विताभिधानमनभिहिते वा? प्रथमे तदपि पदमन्विततया प्रथमपदाभिहितमर्थमपेक्षते, तदपि पद द्वितीयपदाभिहितमिति परस्पराश्रयः। द्वितीये पदान्तरप्रयोगवैयर्थ्यम्, एकस्माच्च पदात्सर्वान्वयप्रतीतिप्रसङ्गश्चेति। नैवम्—आकाङ्क्षादित्रयस्योपलक्षणत्वात्। आकाङ्क्षितं सन्निहितं योग्यं यदर्थान्तरं तदन्विते शक्तिग्रहणात्, का पुनरियमाकाङ्क्षा? प्रतिपत्तुर्जिज्ञासा। सा किन्निबन्धना? अविनाभावनिबन्धनेति केचित्। तथाहि क्रिया कारकाविनाभाविनी तां श्रुतवतः कारकजिज्ञासा स्यात्। एवं कारकमपीति। तदयुक्तम्, जिज्ञासाविरमानुपपत्तेः। उभयाविनाभाविनां पदार्थानामानन्त्यात्। अतोऽन्यदेव निबन्धनमभिधानापर्यवसानमभिधेयापर्यवसानं च। द्वारमित्यादावेकपदप्रयोगे प्रतिसंबन्ध्यनुपादानेनान्विताभिधानापर्यवसानात्प्रतियोगिजिज्ञासायां संव्रियतामित्यनेनान्विताभिधानम्। यत्राप्यनेकपदप्रयोगेऽभिहितोऽर्थो न पर्यवस्यति। यथा 'दिवा अभुञ्जानो देवदत्तः पीन' इति तत्र रात्रिभोजनजिज्ञासायां 'रात्रौ भुङ्क्ते' इत्यनेनान्विताभिधानम्। तथा 'विश्वजिता यजेत' 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति, इति वाक्यद्वये नियोज्याकाङ्क्षायां स्वर्गकामपदेनान्विताभिधानम्। नियोज्यजिज्ञासाप्रकारस्तूपरिष्टाद्वक्ष्यते ॥

नन्वेवं 'गामानय शुक्लां दण्डेन' 'रक्तः पटो भवति' इत्यत्र शुक्लरक्तपदाभ्यामन्विताभिधानं न स्यात्, ताभ्यां विनाऽपि वाक्यपर्यवसानात्? सत्यं तदप्रयोगे, तत्प्रयोगे तु समभिव्याहृतसर्वपदानां संभूयकारित्वव्युत्पत्तेरेकवाक्यताबलात्तद्विषयामाकाङ्क्षामुत्थाप्य ताभ्यामन्विताभिधानम्। तदुक्तं भाष्ये—'भवति तु रक्तं प्रत्याकाङ्क्षेति। अयं तु विशेषः—द्वारमित्यादावाकाङ्क्षावशात्सन्निधिः कल्प्यते। अत्र तु सन्निधिवशादाकाङ्क्षा इति। अत एवोत्थापिताकाङ्क्षा स्वारसिकाकाङ्क्षा इत्याकाङ्क्षाद्वैविध्यमाहुः॥

ननु सन्निधियोग्यत्वे द्वे एव व्युत्पत्तावुपलक्षणं स्याताम्। किमाकाङ्क्षया? मैवं, तयोस्सतोरप्याकाङ्क्षाविरहेणान्वयादर्शनात्। यथा 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यत्र राजपुरुषयोः पुत्रापसर्पणनिराकाङ्क्षयोर्न परस्परान्वय इति। सा च प्रतियोगिषु सर्वेषु न युगपद्भवति, किं तु प्रधानोपसर्जनभावेनान्वयार्हतत्तदर्थयोग्यताक्रमेण। तथा हि—'गामानय शुक्लां दण्डेन' इत्यत्र प्रथमं कर्मविषया पश्चात्तद्विशेषणविषया तदनु करणविषया,। एवं 'स्वर्गकामो यजेत' इत्यत्रापि आकाङ्क्षाक्रमेणान्वयो वक्तव्यः। क्रमनियमे च लौकिकानां प्रतिपत्तिरेव प्रमाणम्। तदुक्तं वाक्यार्थमातृकायाम्—

> अन्वितस्याभिधानार्थमुक्तार्थघटनाय वा।
> प्रतियोगिनि जिज्ञासा या साऽऽकाङ्क्षेति गीयते॥
> परिपूर्णेन योग्यस्य समीपस्याप्यनन्वयात्।
> व्युत्पत्तौ तेन शब्दानामाकाङ्क्षाऽप्युपलक्षणम्॥
> जिज्ञासा जायते बोद्धुस्संबन्धिषु यथायथा।
> तथातथैव शब्दानामन्वितार्थाभिधायिता॥

इति॥ अथ कस्सन्निधिः, यस्यार्थस्य श्रवणानन्तरमाकाङ्क्षायोग्यताभ्यामर्थान्तरे परिवृत्तिः। सा च न केवलं शब्दनिबन्धना। अध्याहृतेनाप्यन्विताभिधानदर्शनात्। ननु तत्रापि शब्द एवाध्याह्रियते। स चार्थमुपस्थापयतीति चेत्, न, अन्विताभिधानानुपपत्तिवशात्खल्वध्याहारः। सा च योग्यप्रतियोग्यर्थोपस्थापनेन शान्तेति न शब्दकल्पनायां प्रमाणम्। एतच्चार्थापत्तिप्रकरणेऽभिहितम्। अतश्शब्दोपस्थितेनाध्याहृतेन वाऽन्विताभिधानम्। आकाङ्क्षावत्सन्निधिरपि क्रमेणैव भवति। तदुक्तम्—

सन्निधिश्शब्दजन्मैव व्युत्पत्तौ नोपलक्षणम् ।
अध्याहृतेनाप्यर्थेन लोके संबन्धदर्शनात् ॥
सहसैव न सर्वेषां सन्निधिः प्रतियोगिनाम् ।
सन्निधापकसामग्रीक्रमेण क्रमवानसौ ॥
यथायथा सन्निधानं जायते प्रतियोगिनाम् ।
तथातथा क्रमेणैव शब्दैरन्वितबोधनम् ॥

अत्राकाङ्क्षायोग्यत्वे सन्निधिनिबन्धने । अनाकाङ्क्षितस्यायोग्यस्य सन्निहितस्यापि वेदे प्रकरणादुत्कर्षः । लोके त्वर्थान्तरापार्थकाप्राप्तकालादिप्रसङ्गः । सन्निधानेऽपि लोकप्रतीतिरेव प्रमाणम् ॥

किं पुनरिदं योग्यत्वं? यत्संबन्धार्हं, तच्च लोकप्रमाणसिद्धम् । यस्य तु योग्यत्वमवधारितं तस्यान्वयः । यस्य तु न, न तस्य । यथा 'वह्निना सिञ्चेत्' इत्यत्र वह्निसेकयोः । अत एव वेदे सन्निहितस्याप्ययोग्यस्य प्रकरणादुत्कर्षः । लोके त्वर्थान्तरादिनिग्रहस्थानप्रसङ्गः ॥

ननु तर्हि कथं वैदिकपदानामपूर्वकार्येणान्विताभिधानं, तस्य मानान्तरागोचरतया तेन सह कस्यचित्संबन्धयोग्यत्वादर्शनात् । अत्रापि सामान्यतो योग्यतावधारणं विशेषान्वयप्रतिपत्तावुपायइत्यदोषः । यदपूर्वं तदपि कार्यमेवेति लौकिककार्यसंबन्धार्हं यत्तद्वेदेऽपि योग्यमित्यवसीयते । तदुक्तम्—

सामान्येनैव योग्यत्वं लोके यदवधारितम् ।
तदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम् ॥

अन्ये तु—यदयोग्यतया नावधारितं तद्योग्यम् । तेनालौकिकेनापि विध्यर्थेनान्विताभिधानं सिध्यतीत्याहुः । तन्न, यथा ह्यलौकिके वस्तुनि योग्यता नावधार्यते तथैवायोग्यतेति सर्वस्य सर्वप्रकारेणान्वयस्स्यात् । ततश्च भावार्थस्यैव विषयत्वेनान्वयः, अनुपादेयविशेषणविशिष्टस्यैव स्वर्गकामादेर्नियोज्यत्वेमेति नियमो न स्यादित्यलम् । क्वचिद्योग्यताबलादेव विप्रकृष्टानामपि सन्निधिं परिकल्प्यान्वयः । यथा अनारभ्याधीतानां पर्णतादीनां प्रकृतावन्वयः, योग्यतापरामर्शबलादेवापूर्वविषयनियोज्यानां लोकप्रसिद्धक्रियाकारकभावेनान्वयप्रकारमतिलङ्घ्य विलक्षणप्रकारेणान्वयः ।

प्रथमं शब्दमुखेनान्वितानामपि पश्चादर्थमुखेनाप्यन्वयधीः। अत एवारुणाधिकरणे प्रथमं क्रमेणान्वितानामप्यारुण्यादीनां पश्चात्पार्ष्ठिको द्रव्यान्वयः। तथा प्रथमं विषयीभूतस्य भावार्थस्य पश्चात्करणतया, तथा प्रथमं नियोज्यतयाऽन्वितस्य स्वर्गकामादेः पश्चादप्यधिकारिकर्तृभावेन ॥

आकाङ्क्षादीनां त्रयाणां न केवलमन्वयं प्रत्येव कारणत्वं किंत्वन्योन्यमपि कार्यकारणभावस्तत्रतत्रान्वयवशादवगन्तव्य इति गम्भीरोऽयं न्यायमार्गः। तस्मात्प्रतियोग्यानन्त्येऽप्युपलक्षणाश्रयणान्न संबन्धग्रहणासंभवः। अत एव न सामान्यतोऽन्विताभिधानं, विशेषतो व्युत्पत्तेः ॥

ननु व्युत्पत्तौ उपलक्षणत्रयाश्रयणे गौरवं, न। अभिहितान्वयवादिनापि नियतान्वयसिद्ध्यर्थमवश्याङ्गीकारात्। आकाङ्क्षाद्युपलक्षिता एव पदार्था अन्वयं बोधयन्ति नान्य इति। यत एवान्विते शक्तिः। अतः पदार्थप्रतिपादनमवान्तरव्यापारीकृत्य वाक्यार्थप्रतिपादकानीति मतं निरस्तं, अन्वितस्यैव वाक्यार्थत्वात् ॥

ननूपलक्षणपक्षेऽप्युपलक्षितानामानन्त्यात् गामानय बधान मुञ्च इत्येकस्यैव गोपदस्यानन्ताः शक्तयस्स्युः। अभिहितान्वयवादे तु अर्थैक्यादेकैवेति चेन्न। एकयैवाकाङ्क्षितसन्निहितयोग्यप्रतियोगिगोचरया शक्त्या नानाप्रतियोगिभेदेऽपि तत्प्रतियोगिबोधनकार्यभेदोपपत्तेः। यथा—चक्षुरेकयैव रूपरूपवत्तत्समवेतवस्तुगोचरया दर्शनशक्त्या प्रतियोगिभेदेऽपि तत्तद्दर्शनकार्यभेदहेतुः। किं च पदार्थानामाकाङ्क्षाद्युपलक्षितानन्तप्रतियोग्यन्वयप्रबोधने इयमनुपपत्तिस्समानैव। अपि च प्रत्ययस्तावत्प्रकृत्यर्थान्वितं स्वार्थमभिधत्त इति भवताऽप्युक्तम्। तथा प्रकृतिरपि। ततश्च सर्वमपि पदजातं तथैव स्यात्, किमर्थवैशसेन।

नन्वेवमप्यन्वयवानन्वितः। अन्वयस्तु विशेषणमितरस्तु विशेष्यः। ततश्चोभयत्र शक्तिरवर्जनीयेति गौरवमिति चेन्मैवम्। अन्वयवत्त्वैवान्वितत्वम्, न स्वन्वयमन्तरेणान्वितत्वस्य पृथगात्मलाभः। न हि घटमन्तरेण पटवदन्वयमन्तरेणान्वितत्वं पृथगवतिष्ठते। ततश्चान्वयमन्तरेणान्वितत्वस्य प्रत्येतुमशक्तेः तत्प्रतीतौ च तत्प्रतीतिरेकैव। शक्तिरन्वयपर्यन्ता व्यक्तिवत्। न हि व्यक्तिमन्तरेण जातिः प्रत्येतुं शक्यते। वस्तुस्वभावाद्व्यक्तिप्रतितावेव तत्प्रतीतिः। आकारभूता हि तद्द्गाः। न ह्याकारिणमन्तरेणाकारप्रतीतिः। तर्हि तयोरप्येकशक्तिगोचरत्वं स्यात्।

न स्यात्। यथाऽन्वयवत्त्वमेवान्वितस्वरूपं, नैवं व्यक्तिमत्त्व जातिस्वरूपं, व्यक्तेः पृथग्भूता, तदाकारभूना हि सा। अतो नैकशक्तिगोचरत्वं तयोः। तदुभयप्रत्यायने शक्तिद्वयं स्यात्। न स्यात्। शक्तिमन्तरेणापि जातिस्वभावादेव व्यक्त्या सहोपलब्धेः। तथाहि– जातिवाची हि शब्दो व्यक्तिमन्तरेण जातिं प्रत्याययितुं न शक्नोति। आकारिणमन्तरेणाकारस्य प्रत्येतुमशक्तेः। अतो जात्यभिधायकतयैव जातिशब्दो व्यक्तिमपि प्रत्याययतीति न शक्तिस्तत्र कल्प्यते। अनन्यलभ्य-श्शब्दार्थ इति न्यायात्॥

नन्वेकप्रतीतिविषयत्वेऽप्येकस्यानभिधेयत्वमन्यस्याभिधेयत्वं च कुतः? इत्थम्–तत्र तावदनन्तासु व्यक्तिषु सङ्गतिरशक्या। जात्युपलक्षितास्तु यद्यपि शक्याः। तस्मिन्नपि पक्षे जातौ शब्दस्य शक्तिरवश्याङ्गीकार्या। अन्यथा शब्दाज्जातेरप्रतीति-प्रसङ्गात्। ततो वरं जातावेव शक्तिः। व्यक्तिस्तु जात्यभिधायकत्वस्वभावलभ्या लाघवादिति न सर्वसाम्यं व्यक्तिदृष्टान्तस्य। किं तु तत्प्रतीतावेव तत्प्रतीतिः, तद-प्रतीतौ च तदप्रतीतिः इति दर्शनरहस्यम्। कथंचिच्छक्तिद्वयकल्पनेऽप्यभिहिता-न्वयवादादन्विताभिधानपक्ष एव श्रेयान्। पदानां स्वार्थे तदर्थानां वाक्यार्थे पुनरपि पदानां तदाधाने इति शक्तित्रयम्। अत्र तु शक्तिद्वयम्। पदानां स्मारकत्वपक्षे यद्यपि कथंचित्साम्यम्। तथापि वाक्यार्थस्य शाब्दत्वसिद्धये पदानामेव सा अन्वितगो-चराऽङ्गीकार्या। किं च इतोऽप्यन्विताभिधानमेव युक्तम्। यतः प्रथमभावीनि पदान्यतिलङ्घ्य पदार्थेषु वाक्यार्थबोधनशक्तिराश्रयितुमयुक्ता। किंच पदानां वाक्या-र्थाभिधानशक्तिरविवादा, भवद्भिरङ्गीकारात्। ततश्च सैवान्वितपर्यन्ता स्वीकार्या, न तु पदार्थानामन्या स्वीकार्या, धर्मिकल्पनातो धर्मकल्पनाया लघीयत्वात्। किंच येन नाम पदानां स्मारकत्वमङ्गीकृतं तेनापि तेषां वाक्यार्थे तात्पर्यमङ्गीकृतम्। तथा च तेषामेव साक्षाद्बोधनशक्तिरस्तु, किं परम्पराश्रयणेन? तदुक्तम्—

प्राथम्यादभिधातृत्वात्तात्पर्योपगमादपि।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम्॥

इति॥ तस्मादन्विताभिधानमेव युक्तम्। तच्च मुख्यपदानामेव। गौणलाक्ष-णिकयोस्तु प्रतियोगिमात्रोपस्थापकत्वमेव, नान्वितबोधकत्वं, तत्र तयोश्शक्तिग्रहणा-भावात्। तद्ग्रहणे चानेकार्थत्वं तयोः स्यात्, तच्चान्याय्यम्। अक्षादिपदेषु

त्वनेकार्थत्वमगत्या । इह तु संबन्धानुपपत्तिभ्यां गुणयोगाच्चार्थप्रतीतिसंभवे तत्रापि शक्तिकल्पनमयुक्तम् । इत्थमाकाङ्क्षादित्रयोपाधिवशेनान्विते शक्तिग्रहणाद्विशेषेणैवान्विताभिधानं समर्थितम् ॥

केचित्तु सामान्याकारेणाहुः । तथाहि—क्रियापदं हि कारकसामान्यान्वितं स्वार्थमाह । एवं कारकपदमपि । सर्वोऽपि शाब्दोऽन्वयः क्रियाकारकभावेनैव । अन्वयव्यतिरेकाभ्यां हि शक्तिग्रहः, तौ च सामान्यगोचरौ, अतस्सामान्येनाऽन्विताभिधानमिति । तन्न, तन्मते विशेषवाक्यार्थावगतिर्दुर्लभा, प्रमाणाभावात्, पदानि चेत्सामान्यान्वितपर्यवसितशक्तीनीति । अथ सामान्यस्य विशेषपर्यवसानात्तत्सिद्धिरिति चेत्, तथापि निर्धारितविशेषावगतिर्दुर्लभा, प्रमाणाभावादेव । अथ विशेषमात्राक्षेपे पदान्तरोपस्थापिते योग्ये विशेषे पर्यवसानमिति चेत्, एवं चेद्विशेषान्वयव्युत्पत्तिरेव मुखान्तरेणाङ्गीकृता स्यात् । किंच क्रियास्वभावालोचनयाऽपि तस्य कारकमात्रेणान्वये सिद्धे तत्रापि शब्दप्रयासो व्यर्थः । एवं कारकस्वभावालोचनयाऽपि । अस्माकं चेदाकाङ्क्षादित्रयं विशेषव्युत्पत्तावुपकारकम् । इतरस्य तु नोपकारकम् । कथं चिदुपकारकत्वेऽपि पदान्तरसन्निधिर्व्यर्थ एवेति विशेषत एव युक्तम् । यदि पदान्तराभिहितेनैवान्विताभिधानं तदेतरेतराश्रयः स्यादित्युक्तम् । मैवम्, इत्थं हि पदेभ्यो वाक्यार्थावगतिः—प्रथमं श्रूयमाणानि पदानि परस्परानन्वितान्स्वार्थान्स्मारयन्ति । स्मृतेषु तेषु पश्चाच्छ्रोतुः स्वस्वार्थविषयो विमर्शो जायते । इदमेकवाक्यं भिन्नवाक्यमिदं विवक्षितार्थमविवक्षितार्थमिदं लाक्षणिकं मुख्यमिदमन्वयार्हमिदं प्रधानमप्रधानमिदं विधेयमविधेयं चेत्येवमाद्यात्मकः । ततश्च वाक्यार्थनिर्णयौपयिकन्यायानुसंधानेन यथावच्छब्दार्थानुसंधानविषययोग्यायोग्यविभागे सति स्मृत्यारूढानि तान्येव पदान्यन्विताभिधायकानीति स्मृतिदशायां परामर्शदशायामभिधानदशायां च नेतरेतराश्रयः ॥

ननु पदान्येव वाक्यमित्युक्तम् । तत्रैकैकं पदं वाक्यं तत्संघातो वा ? नाद्यः, पदान्तरप्रयोगवैयर्थ्यात् । न द्वितीयः, संघातस्य चान्यत्वप्रसंगात् । मैवम्, पदान्येव वाक्यम् । तान्यपि न संघातात्मना, किं तु प्रत्येकं पदात्मकतयैव । तथाहि—गामानय इत्यत्र गोपदमानयत्यन्वितस्वार्थबोधकम् । आनयतिपदं तु तदानीं प्रतियोगिमात्रोपस्थापकम् । एवमानयेतिपदमपीत्युभयमपि वाक्यम् । एवं दण्डेनेत्यादीन्यपि । प्रतियोग्युपस्थापकतया च न पदान्तरप्रयोगवैयर्थ्यमपि । अभिधानदशा-

यामेकस्मृत्यारूढानि सर्वाण्यपि पदानि युगपदेव बोधकानि। गुणप्रधानभावेनान्वये सति प्रधानैक्याद्वाक्यार्थैक्यं, तदैक्याद्वाक्यैक्यमपि। प्रधानप्रतिपत्तिश्च नैकनिबन्धना। कथं नु नाम प्रधानं विशिष्टं प्रतीयतामित्येवमर्थं गुणप्रतिपादनमिति गुणा अपि प्रधानशेषभूता इति तत्प्रतिपादनमपि नैकस्मात्पदात्। प्रधानं प्रयोजनं कार्यमिति यावत्, सर्वेषामपि पदानां कार्यपरत्वव्युत्पत्तेः। एतेन प्रथमं पदं प्रधानं पदं वा अन्विताभिधायि, अतस्तदेव वाक्यम्। अन्त्यप्रतियोगिमात्रोपस्थापकमित्यादिवादा निरस्ताः। प्राथम्यादेरनियतत्वाच्च॥

केचित्तु पदातिरिक्तं वाक्यं पदार्थातिरिक्तश्च वाक्यार्थ इत्याहुः। तन्मते वाक्यस्यानियतत्वात्तस्य तदर्थे व्युत्पत्तिरशक्या। अपूर्ववाक्यश्रवणे च तदर्थप्रतीतिर्न स्यात्। तत्र तस्याव्युत्पत्तेः। अनियतत्वं च, पदान्तरप्रक्षेपे तत्प्रतिक्षेपे च वाक्यान्तरपरिणामात्। नियतक्रमा एव हि वर्णाः पदत्वेन नियताः। किं चाल्पैरेव पदैः अष्ट वाक्यानि परिणमन्ते। तत्रानेकशक्तिकल्पनाः स्युः। तथा हि—"शिशो! गामानय गां बधान, अर्भक गामानय गां बधान, डिंभक! गामानय गां बधान, वत्स गामानय गां बधान" इति सप्तभिः पदैः अष्टवाक्यानि। तत्र पदव्युत्पत्तिवादिनः सप्त शक्तयः, वाक्यव्युत्पत्तिवादिनस्त्वष्टौ। तथा 'शुक्लाम्' इति पदप्रक्षेपेऽष्टापराः प्रकल्प्याः।। पदवादिनस्त्वेका। अस्माकं तु पदान्येव वाक्यं तदर्थ एव वाक्यार्थ इति न किंचिदनुपपन्नम्॥

नन्वन्विते व्युत्पत्तेरन्वितपदार्थप्रतिसंबन्धीनि पदानि। न तैस्स्मरणदशायामनन्वितपदार्थस्मरणम्। उच्यते—अन्वितेऽर्थेऽनन्वितांशस्यापि विद्यमानत्वात् तत्स्मरणमुपपद्यते, प्रतियोगिनस्त्वनियतत्वेन, न स्मृतिविषयता। विशिष्टानुभवेऽपि क्वचित्कारणवशाद्विशेष्यमात्रस्मरणं च लोके बहुशो दृश्यते। अथवा यथा निर्विकल्पकगृहीतादप्रमाणभूतादवाच्यादप्यर्थाद्वाचकशब्दस्मरणं एवमभिधायकत्ववेषमनपेक्ष्य केवलमर्थप्रतिसंबन्धिशब्दमात्रादप्रमाणभूतादप्यर्थस्मरणं युज्यते। परस्परप्रत्यासत्तिरेव स्मरणनिमित्तम्, न प्रमाणत्वाप्रमाणत्वे। श्रूयमाणं च पदं नान्विताभिधायकम्, तदानीं प्रतियोगिनोऽनुपस्थानात्, तत्सापेक्षत्वाच्चान्विताभिधानस्य। ततश्च पदोच्चारणानन्तरमनन्वितपदार्थस्मरणमुपपन्नम्। मतान्तरेऽपि पदानां स्मारकत्वमभिमतम्। यथा अभिहितान्वयवादे स्मृतेभ्यः पदार्थेभ्यः अन्वितप्रतीतिः तथा स्मृतेभ्यः पदेभ्योऽपि नानुपपन्ना। ननु यदि स्मृतिसन्निहितेन पदार्थेनान्विताभिधानं तत्स्मृतिश्च शब्दात्,

तर्हि गोपदस्य गोत्वेनेवार्थान्तरेणापि प्रत्यासत्तेः तस्यापि गोपदेन स्मरणे सति गामानयेत्यत्र आनयतिना नियमेन गोरन्विताभिधानं न स्यात् । एवमानयतेरपि । नैवम्—अभिहितान्वयवादेऽप्यस्य दोषस्य तुल्यत्वात्, गोपदार्थस्यानयतिनेव पदार्थान्तरेणापि संबन्धात् । तस्मादावाभ्यामयं दोषः परिहर्तव्यः । परिहारस्तु गोपदप्रयोगे तस्यैव नियमेन स्मरणमनुगतत्वात्, न त्वर्थान्तरस्य, तदभावात् । एवमानयेतिप्रयोगेऽपि । तस्मात्तयोरेवान्विताभिधानम् । अर्थान्तरैरन्विताभिधाने एकवाक्यं च न स्यात् । तस्माल्लौकिकं वैदिकं च पदजातमन्वितबोधकतयैव प्रमाणमिति सिद्धम् । य एव लौकिकास्त एव वैदिका इति लोकवेदाधिकरणन्यायात् । एतत्सर्वमभिप्रेत्योक्तं प्रकरणपञ्चिकायाम्—

पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥
स्मृतिसन्निहितैरेवमर्थैरन्वितमात्मनः ॥
अर्थमाह पदं सर्वमिति नान्योन्यसंश्रयः ॥

न्यायसंपादितव्यक्तीति वृद्धव्यवहारप्रवर्तितायां शब्दार्थप्रवृत्तौ ये न्यायाः शब्दार्थगोचराः एकवाक्यत्वभिन्नवाक्यत्वादयः पूर्वोक्तास्साधारणाः ये च द्वादशाध्यायीप्रतिपाद्या वेदार्थनिर्णये प्रातिस्विकाः शब्दान्तराभ्यासादयः श्रुतिलिङ्गवाक्यप्रकरणादयः श्रुत्यर्थपठनस्थानादयो वचननामधेयचोदनादयश्च तैर्विमर्शदशायां संपादिते शब्दार्थानामन्वयार्हत्वविभागे सति पश्चात्स्मृत्युपनीतैः पदैर्योग्यक्रमेण वाक्यार्थावगतिरित्यर्थः । तस्माल्लौकिकं वैदिकं च वाक्यं न्यायसापेक्षमेवार्थबोधकं यद्विप्रतिपन्नार्थमपि । प्रतिपन्नार्थं तु तदनपेक्षमेव झडिति बोधकम् । वेदवाक्यार्थसंशये सति तन्निर्णयौपयिकन्यायनिबन्धनं हि शास्त्रं मीमांसा, सा च द्वादशाध्यायी । तदारम्भश्चाग्रे समर्थयिष्यते । सा च करणीभूतस्य वेदस्येतिकर्तव्यता, यथा चक्षुष आलोकः, यथा वाऽनुमानस्य व्याप्तिस्मरणं, यथा वोपमानस्य सादृश्यं, यथा वाऽर्थापत्तेस्संदेहापत्तिः, । तदुक्तम् ।—

धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥

इति ॥ तस्मादन्विते व्युत्पत्तेस्सर्वमपि पदजातमन्विताभिधायीति स्थितम् ॥

नन्वस्त्वन्विते व्युत्पत्तिः, तद्वशात्कथंचिदप्रतीतिरपि स्यात्। तथाहि— '.अङ्गुल्यग्रे करिणां यूथशतमास्ते' 'जरद्गवो गायति' इत्यादिना वृद्धव्यवहारे व्युत्पन्नानामपि लौकिकपदानामर्थासंस्पर्शित्वदर्शनात्सर्वाण्यपि पदान्यर्थासंस्पर्शीनीति कथं तेषां प्रामाण्यम्? अर्थप्रतीतिस्तु केवलं शब्दसाहचर्यप्रभवतया भ्रान्तिरेव, न स्वव्यभिचारिणीति नियमः। ननु शुक्तिकारजतादिवल्लौकिकवाक्यानां कारणदोषेण दुष्टतया भेदाग्रहात् भ्रान्तत्वं युक्तम्। वैदिकानां तु निर्दोषतया स्वाभाविकं निश्चायकत्वमेवेति चेन्न। दोषासंभवाद्युक्तं साक्षादिन्द्रियजन्यतया रजतज्ञानस्य तद्दोषाद्दुष्टत्वम्। इह तु शब्द एव हि साक्षात्प्रत्यायकः, वक्तारस्तु केवलं शब्दाभिव्यञ्जकाः। तद्दोषाश्च न तेषु संक्रामन्ति। अतो लौकिकानां स्वतोऽर्थासंस्पर्शित्वं, वैदिकाश्च न लौकिकेभ्यो भिद्यन्ते। अतस्तेषामप्यर्थासंस्पर्शित्वं स्यात्। किं च व्युत्पत्तिश्च लोके, ततश्च सुतराम्। ननु तर्हि कथमाप्तवाक्येभ्यः प्रवृत्तिः? कथं वा संवादः? न, तत्र संदेहादपि तदुपपत्तेः। कृष्यादिषु संदेहादपि हि प्रवर्तन्ते। संवादश्च यादृच्छिकः। अपि च लौकिकेषु मानान्तरवशेनाप्यर्थनिर्णयस्स्यादेव। वेदे तु वक्तुरभावात्तदर्थस्य मानान्तरागोचरत्वाच्च न तत्र निर्णय इत्यर्थासंस्पर्शिन एव वेदाः।

अत्रोच्यते—अर्थासंस्पर्शे जगति शब्दमूला प्रवृत्तिर्न स्यात्। तत्प्रतिपादनं च न घटेत, तस्यापि शब्दमूलत्वात्। यथाकथंचित्संस्पर्शे नियता प्रवृत्तिर्न स्यात्। तस्मात्तत्संस्पर्शोऽङ्गीकार्यः। तत्र लौकिकं पदजातं तावत् लिङ्गतयाऽर्थप्रत्यायकं, न तु स्वयं प्रमाणत्वेन। तत्र यद्यपि शब्दार्थयोस्संबन्धस्तावदौत्पत्तिकः। तत्परिज्ञानं च शक्तिग्रहात्। स च वृद्धव्यवहारप्रवर्तितायां व्युत्पत्तौ गृहीतसंबन्धं च पदजातं स्वरसतोऽर्थप्रत्यायकमित्येतावत्सर्वजनसम्मतम्, तथापि लौकिकवाक्येषु वक्तृदोषशङ्कया सा शक्तिस्तिरोधीयते। तथाहि—तत्र पुरुषा भ्रमातिशयदोषप्रमादाशक्तिभिरनन्वितार्थानि वाक्यानि प्रयुञ्जाना दृश्यन्ते। तद्दृष्टान्तबलेन सर्वत्राप्यनन्वितार्थत्वशङ्कायां लौकिकं वाक्यं श्रुतमात्रं नार्थनिश्चायकं, यावद्वाक्यस्य प्रमाणमूलत्वं न निश्चितम्। पश्चात्तु, कदाचिदप्यनन्वितार्थानि वाक्यानि न प्रयुङ्क्ते। अर्थं ज्ञात्वैवान्योन्यान्वययोग्यार्थं पदजातं ब्रवीति। तस्मादाप्त इत्याप्तत्वनिश्चये सति पश्चात्तस्माद्वाक्यात्कार्यभूतात्कारणभूतं वक्तृज्ञानमनुमीयते, इदं वाक्यं स्वार्थसंसर्गज्ञानपूर्वकं, आप्तवाक्यत्वात्, मदीयवाक्यवत्। पश्चात्तु तज्ज्ञानमर्थाविनाभावि, ज्ञानत्वात, मदीयज्ञानवदिति ज्ञानेनार्थोऽनुमीयते। इत्थं वाक्यार्थे निश्चिते सति पश्चात्तदेव वाक्यमुद्बुद्धशक्तिकं सत्तस्यार्थस्य वाचकम्। तस्यां दशायां अनुमितार्थबोधकत्वादनुवादकमेव, न तु

प्रमाणम् । तस्माल्लौकिकं वाक्यं लिङ्गतयैव प्रमाणं, न तु स्वतः। अनाप्तवाक्यं चेल्लिङ्गाभास एव, व्यभिचारात् । शब्दस्य तु न क्वचिदपि व्यभिचारोऽस्ति । तस्य तु शास्त्ररूपस्य स्वत एव प्रमाणत्वात् । लौकिकं तु वाक्यं न शास्त्रं, किं तु लिङ्गम् । अतस्तदेव व्यभिचारि । विचार्यमाणे लिङ्गस्यापि न व्यभिचारः । प्रत्ययितवचनादप्रत्ययितवचनं विवेकेनाप्रतिपद्यमानप्रत्ययितवचने दृष्टम् । ग्रहणापूर्वकत्वव्यवहारमप्रत्ययितवचने प्रवर्तयतीति न लिङ्गस्यापि व्यभिचारः । तस्माल्लौकिकमाप्तवाक्यमनुवाददशायामर्थसंस्पर्शि । अनाप्तवाक्यं चेत्केवलं स्वस्वार्थस्मारकतया अर्थासंस्पर्शीति सिद्धम् । वेदे तु, वक्तुरभावात् असति शक्तिप्रतिबन्धे स्वरसप्राप्तं वाचकत्वं सुस्थमेवेत्यर्थसंस्पर्शिन एव वेदाः ।

ननु लौकिकानि पदानि लिङ्गतया बोधकानि चेत्, कथं तेषां स्वस्वार्थे शक्तिग्रहः ? उच्यते—न हि धूमवदविनाभावबलेनैवानुमापकं, किं तु वाचकशक्त्यन्तर्भावबलेनैव । न हि यत्किंचिच्छब्दमात्राद्यत्किंचिदर्थमात्रमनुमीयते, किं तु विशिष्टाच्छब्दाद्विशिष्टोऽर्थः । वाचकत्वमेव शब्दस्य विशेषः, वाच्यत्वमेवचार्थस्य । ततश्च प्रथमं वृद्धव्यवहारे पूर्वोक्तेन मार्गेण वाचकाच्छब्दाद्वाच्यार्थव्युत्पत्तौ सत्यां कुतश्चित्कारणादर्थव्यभिचारशङ्कायां पश्चात्तस्मिन्नेवार्थे तस्य शब्दस्य लिङ्गत्वं, ततः पश्चादनुवादकतयाऽपि वाचकत्वमिति व्युत्पत्तिसमयेऽनुवादसमये च शक्तिग्रहणमुपपन्नमिति गम्भीरोऽयं न्यायमहाह्रदः ॥

ननु प्रत्ययितत्वज्ञानेन व्यभिचारशङ्कायां निवृत्तायां वाक्यं स्वत एवार्थे प्रमाणं स्यात्, किमिति वक्तृज्ञानानुमानं भवेत् । मैवम्,—प्रत्ययितत्वं नाम समीचीनज्ञानपूर्वकवाक्यप्रयोक्तृत्वम् । ज्ञानस्य समीचीनत्वनिश्चयश्चार्थनिश्चयमन्तरेण न स्यादिति न संशयनिवारणमात्रे पुरुषविशेषज्ञानं व्याप्रियते, किंत्वर्थनिश्चयेऽपि । ननु तर्हि निश्चितेऽर्थे संशये च निवृत्ते पश्चात्तत्र प्रमाणं स्यात्, न स्यात्, तस्यां दशायां अनुवादकत्वादित्यसकृदुक्तम् । ननु यदि वाक्याद्वक्तृज्ञानानुमानं, ज्ञानाच्चार्थानुमानं, तर्ह्यनवगतेऽर्थे कथं ज्ञानविशेषोऽनुमातुं शक्यते, ज्ञानमात्रं च नानुमेयम्, अप्रयोजकत्वात् । अर्थेनैव ज्ञानस्य विशेषः, तदुक्तम्—

अर्थेनैव विशेषो हि निराकारतया धियाम् ।

इति ॥ न चानवगतोऽर्थो ज्ञानस्य विशेषमापादयतीति प्रथमत एवार्थविशेषसंघटितं ज्ञानमनुमीयताम्, किमिति पश्चाज्ज्ञानेनार्थानुमानम् ? उच्यते—बुभुत्साक्रमेण ह्यनुमानं, कार्यभूतस्य वाक्यस्य प्रथमं सामान्याकारेण स्वार्थ-

संसर्गज्ञानपूर्वकत्वमात्रं बुभुत्सितम्, ततश्चानवगतेऽप्यर्थविशेषे तादृशज्ञानविशेषोऽनुमातुं शक्यत एव। यादृशार्थप्रतिपादनयोग्यानि पदानि तादृशार्थज्ञानपूर्वकाणीति। इत्थं ज्ञानेऽनुमिते, पश्चात्तेन ज्ञानेनार्थोऽनुमीयत इति बुभुत्साक्रमेणानुमानद्वयप्रवृत्तिरिति न किंचिदनुपपन्नम्। एतत्सर्वं नीतिपथे प्रकटितम्॥

ननु भारतादिवत्पदसंघातात्मकतया वेदः पौरुषेयस्स्यात्, अत एव कठशाखा कण्वशाखेति समाख्या, न चेयं प्रवचननिमित्ता, तस्य सर्वाध्येतृसाधारणत्वात्। बहवो हि प्रब्रूयुः, कर्ता पुनरसाधारणः, असाधारणेन हि व्यपदेशो युक्तः। पौरुषेयत्वे च वेदस्य तदर्थस्य प्रमाणान्तरागोचरत्वात्तद्विषये वक्तुः प्रमाणान्तराभावादप्रमाणमूलतयाऽनन्वितार्थत्वशङ्का स्यादेवेति चेत्, मैवम्,—पुरुषकृतत्वं तावद्भारतादिवन्न स्मर्यते। वैयासिकी भारतसंहिता, पाराशरी विष्णुपुराणसंहितेति स्मर्यते। दुरनुमानं च, मानान्तरागोचरेऽर्थे पुरुषाणां वाक्यरचनानुपपत्तेः, समाख्या तु पौरुषेयी प्रमाणान्तरानुसारिणी न स्वयं पौरुषेयत्वं व्यवस्थापयितुं शक्नोति, प्रमाणान्तरं च न दृश्यते। तस्मात्प्रवचननिमित्ता कठादिसमाख्या, प्रकृष्टं वचनं कस्यचिदेवेति तदप्यसाधारणम्। अध्यायानध्यायादिव्यवस्थयाऽधीयमानस्य व्रतनियमविशेषपूर्वकस्य व्याकरणानुशिष्टस्य स्वरतो विशेषनियतस्यानुष्ठानपर्यन्तस्याविसंवादिपश्वन्नाद्यैहिकफलसाधनस्य शिष्टजनपरिगृहीतस्य महतो ग्रन्थराशेर्भ्रान्तपुरुषप्रणीतत्वशङ्का च निरवकाशा। क्वचित्क्वचिद्विप्रकीर्णविरुद्धाप्रसिद्धार्थतयाऽप्रामाण्यमपि नाशङ्कनीयं, निरुक्तव्याकरणमीमांसादिमुखेन समीचीनार्थतत्वनिर्णयसिद्धेः। प्रमाणान्तरागोचरस्य अपूर्वात्मकस्य वेदार्थस्य बुद्धावारोपयितुमशक्यतया बुद्धिमत्प्रणीतत्वमपि नाशङ्कनीयम्। न हि दर्शपूर्णमासाद्यपूर्वं प्रत्यक्षादिप्रमाणगोचरः। किं तु तच्चोदनामात्रगोचरः। तदाह सूत्रकारः—

"सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्। चोदनालक्षणोऽर्थो धर्मः" इति च॥

तस्मादपौरुषेयो वेदः। पदसंघातात्मकत्वं चोच्चारणवशादुपपन्नम्। तदुच्चारणमुच्चारणान्तरपूर्वकम्, तच्च तथा। अपौरुषेयतया च प्रमाणान्तरपूर्वकता नास्ति, प्रत्यक्षवत्। अत एव चानपेक्षतया वेदप्रामाण्यमिति॥

ननु 'चित्रया यजेत पशुकामः' इत्यादिचोदनाः पश्वादिफलानुविद्धं स्वमर्थमवबोधयन्ति। न च कर्मानन्तरफलं दृश्यते। दृश्यमानमपि प्रतिग्रहादिनिमित्तमेव। अतः प्रमाणान्तरबाधान्न प्रमाणम्। उच्यते—न तावच्छास्त्रेणानन्तरभाविनया फलं

ज्ञाप्यते, किं तु फलसाधनत्वमात्रमपूर्वस्य । न च प्रतिग्रहादिकमपूर्वसाधनत्वपरिपन्थि, तत्साधनत्वेऽप्यपूर्वसाधनत्वाविरोधात् । अतः प्रत्यक्षादिसिद्धं प्रतिग्रहादिकं शास्त्रसिद्धमपूर्वमुभयमपि फलसाधनमिति । अतो वेद एव शास्त्रं पृथक्प्रमाणम् । तत्र लौकिकं वाक्यं लिङ्गतया प्रत्यायकम् । तत्तु, न शास्त्रं, असन्निकृष्टविषयत्वाभावात् । वैदिकमेव शास्त्रमिति सिद्धम् । तत्तु द्विविधं प्रत्यक्षमनुमानं च । तत्राद्यमध्ययनपरिगृहीतस्वाध्यायात्मको वेदराशिः । द्वितीयस्तु नित्यानुमेयः । तत्र लिङ्गं स्मृतिः आचारश्च । तथाहि—'अष्टका कर्तव्या' इति स्मृतिस्तावत् त्रैवर्णिकैरविगानेन परिगृहीता । न चामूलायाः परिग्रह उपपद्यते । न च प्रत्यक्षं मूलं, तस्यापूर्वविषयत्वासंभवात् । स्मृतिस्तु कार्यविषया । ततश्शास्त्रमेव मूलम् । ननु तदपि कथं मूलं, यत्नेनान्वेषणेऽप्यनुपलब्धेः । अनुपलब्धस्य चाबोधकत्वात् ? उच्यते—स्मृतिप्रणेतार एव वयमिव तच्छास्त्रं नोपलभन्ते । तत्समानार्थस्मृत्यन्तरदर्शनेन तेषामप्यस्माकमिवानुमानं संभवत्येव । एवं मन्वादिभ्यः पूर्वेषामपि स्मर्तॄणां तत्समानार्थस्मृत्यन्तरदर्शनेनानुमानम् । इत्थमनादित्वात्स्मर्तृपरम्परायाः लिङ्गभूतायाश्च स्मृतिपरम्परायाः नानुमानत्वविघातः । अत एव नान्धपरम्परावदमूलत्वमपि, अनुमितस्य शास्त्रस्य अर्थप्रतिपादकत्वं च लिप्यनुमिताक्षरवदुपपन्नम् । अनन्तचरणाधारे हि महीमण्डले कुत्रचिदप्यश्रवणमनाम्नानात्, तदेव कथम्, आचार्यान्तरानाम्नानात् ? तदपि कुतः ? तथैव । तत एव नित्यानुमेयत्वं वेदत्वं च, तस्यापौरुषेयप्रबन्धरूपत्वात् । अत एव स्मृतीनां विप्रकीर्णशाखामूलत्वमपि परोक्तं निरस्तं, क्वचित्कदाचित्केनचिदप्यनुपलम्भात् । तथा शिष्टत्रैवर्णिकपरिगृहीताविरुद्धाचारेणापि साक्षाच्छ्रुतिरनुमीयते, मूलान्तरासंभवात् । आचारात्स्मृतिस्ततश्श्रुतिरिति परोक्तमयुक्तं, परम्परायां प्रमाणासंभवात् । तस्माद्द्विविधं शास्त्रम् । उभयमप्यसन्निकृष्टार्थविषयम् । स च कार्यात्मा, सर्वेषामपि शब्दानां साक्षात्परम्परया वा लोके कार्यपरत्वव्युत्पत्तेः । वैदिकानामपि लोकाविशेषात् । तथाहि—यथा मध्यमवृद्धप्रवृत्तिर्ज्ञानपूर्विका, तथा कार्यज्ञानपूर्विका च, न हि ज्ञानमात्रात्प्रवर्तते, किं तु कार्यमेव तदिति ज्ञात्वा । इष्टसाधनताज्ञानस्य प्रवर्तकत्वमग्रे निराकरिष्यते । तच्च कार्यज्ञानं शब्दानन्तरभावित्वाच्छब्दजन्यम् । तस्मिंश्च कार्ये लिङ्लोट्तव्यप्रत्यया एवान्वयव्यतिरेकाभ्यामवधारितशक्तिकाः, ततस्तेषां साक्षात्तत्परत्वम्, इतरेषां तु परम्परया । तथाहि—'देवदत्त गामानय शुक्लां दण्डेन' इत्यादौ विधिप्रत्ययः साक्षादानयतेः कार्यतां बोधयति । आनयतिस्तु क्रियां, गोपदं तदन्वितं कर्म । एवमितराण्यपि कारकपदानि तदन्वितं स्वार्थम्,

अन्विते व्युत्पत्तेः । तथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ वैदिकपदानामपि कार्यपरत्वं द्रष्टव्यम् । एतच्चोपरिष्टात्प्रपञ्चयिष्यते । तस्मात्सर्वेषामपि कार्यपरत्वव्युत्पत्तेः तत्परत्वं सिद्धम् ।

ननु सिद्धार्थपरादपि वाक्याद्व्युत्पत्तिः दृश्यते । कथं तन्मात्रपरत्वम् ? तथाहि—'पुत्रस्ते जातः, क्षेत्रं ते पक्वसस्यम्' इत्यादिप्रयोगे मुखप्रसादादिलिङ्गैः श्रोतुर्हर्षोत्पत्तिरनुमीयते, सा च तन्निमित्तमन्तरेण न संभवति । प्रियवस्तुप्रतीतिश्च हर्षहेतुरिति स्वात्मनि प्रतीतम् । तेन वाक्येन प्रियोऽर्थो बोधित इति सामान्येन प्रतीते परिशेषात्प्रमाणान्तरप्रतिपन्नं पुत्रजन्मैव वाक्यप्रतिपाद्यमिति व्युत्पित्सुरवगच्छति । तस्मात्प्रतिपदमावापोद्वापाभ्यां विशेषार्थनिश्चयो भवति । तथा 'काष्ठैः पचति' इत्यादौ, वर्तमानप्रयोगे । व्युत्पन्नविभक्त्यर्थोऽव्युत्पन्नप्रातिपदिकार्थश्च प्रत्यक्षेण काष्ठानां करणभावमधिगच्छन् प्रसिद्धपचतिपदसमभिव्याहारात्काष्ठशब्दार्थं निश्चिनोति। किं चास्य शब्दस्यायमर्थ इत्यपि लोके व्युत्पत्तिर्दृश्यते । अपि च सिद्धार्थपराण्यपि वाक्यानि लोके प्रश्नोत्तरपराणि दृश्यन्ते । 'कुशलं ते, कुशलं मम' इति । अतः कार्यमात्रपरत्वमनुपपन्नमिति ॥

अत्रोच्यते—सर्वपुरुषाणामाद्या व्युत्पत्तिस्तावद्वृद्धव्यवहारत एवेत्यविवादम् । व्यवहारश्च प्रत्यक्षेण विशिष्टार्थविषय उपलभ्यते । स च कार्यावगममूलः, तस्यैव प्रवर्तकत्वात् । अतः कार्यान्विते विशिष्टार्थे ज्ञानानुमानद्वारेण शब्दस्य शक्तिग्रहस्सुकर एव । नात्र परिशेषापेक्षा, व्यवहारविषयस्य विशिष्टार्थस्य प्रत्यक्षसिद्धत्वात् । सिद्धार्थाख्याने तु व्युत्पत्तिर्दुश्शकैव । यद्यपि तत्परवाक्यप्रयोगे मुखप्रसादादिभिः हर्षोत्पत्तिरनुमीयते । तया च तद्धेतुप्रतीतिः, तन्निमित्तताऽपि शब्दस्यैव। तथापि परिशेषात्प्रमाणान्तरसिद्धपुत्रजन्माख्यहर्षहेतुप्रतिपादकता दुरनुमाना, कालत्रयवर्तिनां सन्निहितव्यवहितानां प्रमाणान्तरसिद्धानां हर्षहेतूनां पारिशेष्यादवधारणायोगात् । तथा अस्य शब्दस्यायमर्थ इत्यत्रापि सर्वपदार्थापरिज्ञाने व्युत्पत्तिर्दुश्शकैव । कतिपयपदार्थज्ञाने तु प्रसिद्धपदसमभिव्याहार एव । तत्र प्रसिद्धानां पूर्वं कार्यान्वितस्वार्थे व्युत्पत्तेरप्रसिद्धार्थस्यापि पदस्य कार्याध्याहारेणैव तदन्वितस्वार्थावगतिरेषणीया । ततश्च सर्वपदानां तत्परत्वं सिद्धम् । एवं च लोके यस्सिद्धार्थपरस्स लाक्षणिक एव, कार्यपरं पदजातं परस्परपदार्थान्वयाव्यभिचारीति कार्यान्वयमविवक्षित्वा परस्परपदार्थान्वयमात्रं विवक्षित्वा लोकश्शब्दं प्रयुङ्क्ते । विवक्षावशेन लक्षणयाऽपि तत्र तात्पर्यं निर्वहत्येव । वेदे तु लक्षणानिबन्धनं

किंचिदपि नेति औत्सर्गिकं कार्यपरत्वमनवग्रहम्। ततश्च सिद्धब्रह्मपराणां सिद्धपरात्मपराणां च 'सत्यंज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, तेनेदं पूर्णं पुरुषेण सर्वं, यस्सर्वज्ञः स्सर्ववित्, द्वे ब्रह्मणी वेदितव्ये परं चापरं च, द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते'। इत्यादीनां वाक्यानां 'आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिविधिनैकवाक्यतामाश्रित्य कार्यपरत्वं वर्णनीयम्। 'भूतं भव्याय' इति न्यायात्। साध्यशेषभूतं सिद्धमिति न्यायादित्यर्थः।

इत्थं वर्णा नित्याः। अर्थाश्च प्रवाहरूपेण। तत्संबन्धश्चापौरुषेयः। तत्परिज्ञानं च शक्तिग्रहात्। शक्तिग्रहश्च वृद्धव्यवहारेण। स च कार्यान्वितस्वार्थे। तत्र पदान्येव कार्यान्वितस्वार्थबोधकानि, न त्वखण्डं शब्दतत्त्वं, नाप्यन्त्यो वर्णः, नापि पदप्रतिपादिताः पदार्थाः, तत्र लौकिकं पदमनुमानरूपं, न शास्त्रं, असन्निकृष्टार्थं वैदिकमेव शास्त्रम्। तदपि द्विविधमित्युक्तम्। लक्षणव्यावर्त्यचिन्तातु अर्थग्रहणेनाभिधेयवचनेन। लैङ्गिकं वक्त्रभिप्रायज्ञानमशास्त्रमित्युक्तम्। असन्निकृष्टार्थमिति पौरुषेयवाक्याभिधेयस्यार्थस्य वक्त्रभिप्रायनिश्चयपुरस्सरं यद्विज्ञानं तन्न शास्त्रमिति। तथाऽर्थवादानां स्वतन्त्राणां सन्निकृष्टार्थपराणां न शास्त्रत्वं, किं तु विध्यन्तरानुप्रवेशेनैव। शब्दग्रहणेन चार्थस्य ज्ञानस्य चाशास्त्रत्वमुक्तम्। तथाहि—

प्रकृतौ 'वाससि मिनोति' 'वाससा सोममुपावहरति' इति सोममानमुपावहरणं च विहितम्। तत्रैकत्वात्कर्मणो यस्मिन्नेव वाससि सोमो मीयते तेनैवोपावह्रियत इत्यचोदितमपि वासस एकत्वमर्थात्संपन्नम्। विकृतौ त्वहर्गणे पृथक्त्वात्सोमस्य एकस्मिन्नपि वाससि नानाभूतस्यापि सोमस्य मानं शक्यते कर्तुम्। उपावहरणं तु पुञ्जीकृत्य वाससाऽऽनयनम्, तदेकेनाशक्यमिति मानवाससोऽन्यत् तदर्थमुपादीयते। एकत्वं तु प्रकृतावार्थं, न शब्दार्थ इति विकृतौ चोदकेन न प्राप्यत इति तत्र वासस एकत्वज्ञानं न शास्त्रमित्युक्तम्। 'अर्थं न चोदकः प्रतिदिशति' इति न्यायात्। विज्ञानमिति न्यायाभासात् वाक्यस्य च वचनव्यक्तिमवधार्य तदर्थज्ञानं न शास्त्रमिति। न हि तच्छब्दविज्ञानात् यादृशं हि सम्यङ्न्यायावधार्यवचनव्यक्तिकं तादृशमेव शास्त्रमिति॥

**इति श्रीमद्रामानुजाचार्यविरचिते तन्त्ररहस्ये**
**शास्त्रपरिच्छेदस्तृतीयः॥**

# अथ चतुर्थः परिच्छेदः

## शास्त्रप्रमेयनिरूपणम् ।

पदवाक्यप्रमाणेषु परां काष्ठामुपागतः ॥
जातवेदोगुरुर्यज्वा जयति क्षितिमण्डले ॥

करणकलेबरमनसां शैथिल्यं सहजमसकृदालोच्य ॥
तन्त्ररहस्यं कृतवान् रामावरजः परोपकारार्थम् ॥

अथ शास्त्रप्रमेयं निरूप्यते । तच्चापूर्वरूपं कार्यं, लिङादिप्रत्ययवाच्यम् । तदेव च विधितत्वम् । कृत्स्नमपि शास्त्रं तत्परमेव । एतच्चाग्रे वक्ष्यते । आचार्यास्त्वन्यथा शास्त्रप्रमेयं विधितत्वं च व्याचक्षते । तदुक्तम्—

अभिधाभावनामाहुरन्यामेव लिङादयः ॥
अर्थात्मा भावना त्वन्या सर्वत्राख्यातगोचरः ॥

इति । अर्थात्मा भावना अर्थभावना पुरुषप्रयत्नः, तत्प्रवृत्तिरिति यावत् । सा सर्वाख्यातवाच्या । अभिधाभावना, शब्दभावना । सा लिङादिवाच्या । ततश्चार्थभावना सर्वाख्यातानां वाच्या । लिङादीनां तु भावनाद्वयमपि वाच्यमित्यर्थः। तन्मतानुसारिभिरन्यथान्यथा विधितत्वं व्याख्यातम् । तत्र केचिदाहुः—लिङादिप्रयोगानन्तरं पुरुषप्रवृत्तिदर्शनात्तस्याश्चेष्टसाधनताज्ञानमूलत्वात् तज्ज्ञानस्य च शब्दनिमित्तत्वात् प्रकृत्यर्थस्य प्रत्ययार्थस्य वा इष्टसाधनत्वं तद्वाच्यमिति प्रथमं पार्श्वस्थो व्युत्पित्सुर्निश्चिनोति । तत्रैकप्रत्ययोपादानेन सन्निकर्षातिशयात्प्रत्ययार्थस्य भावनाया एवेष्टसाधनत्वं लिङादिवाच्यमित्येव निश्चिनोति । एवं च 'स्वर्गकामो यजेत' इत्युक्ते यागभावनेष्टसाधनमित्युक्तं स्यात् । इदमेव प्रवर्तकं विधितत्वम् । तदुक्तम्—

पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः ॥
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥

इति ॥ एतादृश्या भावनाया भाव्याकाङ्क्षायामपुरुषार्थतया समानपदोपात्तोऽपि धात्वर्थो न भाव्यतयाऽन्वेति, भावनाया विधिप्रत्ययावगतेष्टसाधनत्वव्याघातात् ।

तत्र व्युत्पत्तिसिद्धम् । तस्मात्पदान्तरोपात्तमपि स्वर्गादिकमेव पुरुषार्थतया भाव्यकोटौ निविशते, धात्वर्थस्त्वाकाङ्क्षादिवशात् करणकोटौ, सन्निधिपठितमितरत्सर्वमितिकर्तव्यताकोटाविति । इदं मतं तदीयैरेव दूषितम् । तथाहि—

इष्टसाधनत्वं नाभिधेयं, संविद्विरोधात् । न हि यागानुरक्तो व्यापार इष्टाभ्युपाय इत्यस्माच्छब्दाद्यजेतेत्यस्माच्च तुल्यावगतिर्भवति । भवितव्यं च तया । इष्टसाधनत्वस्यैव विधित्वात् । शब्दान्तरस्य च तत्समानार्थत्वात् । सह प्रयोगाच्च । समीहितसाधनत्ववचनशब्दो विधिशब्दश्च सहप्रयुज्यमानौ दृष्टौ । 'माणवक ! सन्ध्यामुपासीनस्य तेऽभ्युदयो भविता, तस्मादुपास्व ' इति । न च पर्याययोस्सहप्रयोगो दृष्टः । लोकप्रमाणकश्च शब्दार्थनिर्णयः तस्मान्नेष्टसाधनतावाचित्वं लिङादीनाम् । अभिधाभावनामाहुरित्यादिश्लोकानुगुण्यं च नास्तीति ।

अन्ये तु—समीहितसाधनत्वं न साक्षाद्वाच्यं, येनेदं दूषणं स्यात् । किं स्वपर्यवसानलभ्यम् । तथाहि—लिङादिप्रत्ययस्सुखदुःखपरिहारतदुपायसाधारणं कार्यमात्रमभिधत्ते, तत्रैव व्युत्पत्तेः । लोके त्रयाणामेव कृतिसाध्यतया कार्यत्वं प्रतिपन्नम् । तस्मिंस्त्वभिहिते भावनारूपायाः क्रियायाः लिङादिवाच्यायाः स्वयं सुखदुःखपरिहाररूपत्वाभावात् पारिशेष्यात्तदुपायत्वं निर्णीयते । तथा च कर्तव्यतावचनो भावनायां पुरुषं प्रवर्तयतीति भूयान् भाष्यवार्तिकयोर्व्यवहारश्चोपपन्नः । अत्रापि भाव्याकाङ्क्षापरिपूर्तिः पूर्ववदिति । इदमपि मतं श्लोकाननुगुणमिति तदीयैरेवोपेक्षितम् । कार्येष्टसाधनतयोर्भेदश्च वक्ष्यते ।

अपरे तु श्रोत्रियाः—लिङादिप्रत्यय एव विधिः । स एव प्रवर्तक इत्याहुः । तदयुक्तम्, तथात्वे तच्छ्राविणस्सर्व एव प्रवर्तेरन् । व्युत्पन्नानां प्रवर्तक इति चेत् कुत्र व्युत्पत्तिः, समीहितसाधनत्व इति चेत्, तर्ह्युपन्यस्तमतादविशेष इति ॥

अपरे तु लिङादिप्रत्ययव्यापारो विधिरित्याहुः । कोऽसौ, शब्दभावना ! कीदृशी ! परप्रेरणात्मिका पुरुषप्रवृत्त्यनुकूला लिङादिप्रत्ययवाच्या तज्जन्या च । लिङादयो हि प्रेरणां कुर्वन्ति चाभिदधति चेति वार्तिककारीयाः । इयमेव चाभिधाभावनामित्यादिश्लोकेनोच्यते । ततश्चाध्ययनविधिपरिगृहीतेषु स्वाध्यायेषु सर्वत्र 'यजेत्' 'जुहुयात्' 'दद्यात्' इत्यादिलिङादिप्रत्ययप्रयोगे 'भावयेत्' इत्युक्तं स्यात् । तस्याश्च किमित्यपेक्षायां समानप्रत्ययोपात्ता पुरुषप्रवृत्तिर्भाव्यतया संबध्यते । प्रेरणा

हि प्रवृत्तिं भावयति । तत्प्रेरितः खलु पुरुषः प्रवर्तते । ततश्च केनेत्यपेक्षायां लिङा-दीनां विधेश्च (यो) वाच्यवाचकभावसंबन्धः । (स) तत्कारणतयाऽन्वेति । अभिहिता हि शब्दभावना प्रवृत्तिं प्रसूते । कथमित्यपेक्षायामर्थवादोदितप्राशस्त्यमितिकर्तव्यतया । अवसीदन्ती हि विधिशक्तिः प्राशस्त्यज्ञानेनोत्तम्यते, प्रेरणावरोधबलादेवार्थभावनायाः स्वर्गादिकमेव भाव्यतया संबध्यते । न तु प्रकृत्युपात्तो धात्वर्थः । अफले प्रेरणानुपपत्तेः । करणाद्यन्वयस्तु पूर्ववदिति ।

एतन्मतमस्मदीयैरेव दूषितम् । तत्र लिङादेस्तादृशो व्यापारो विद्यत इत्यत्र दिव्यदृष्टयो भवन्त एव प्रमाणम् । न तु चर्मचक्षुषो वयम् । शब्दश्रवणानन्तरं भाविनीं प्रवृत्तिं वेत्तीति चेत्, न, तस्यास्त्वन्मते समीहितसाधनता निमित्तम् । अस्मन्मते तु कार्यता । किं च शब्दोऽस्मन्मतेऽम्बरगुणः । भवन्मते तु विभु द्रव्यम् । इत्थं हि भवन्मतस्थितिः । वर्णास्तावद्द्रव्यं, न गुणाः । ते च व्यापका नित्याश्च । ध्वनिस्तावत्तद्धर्मः तद्व्यञ्जकः प्रतिवर्णं विलक्षणः क्षणिकश्च । तत्क्रमस्तावद्दीर्घत्वादिवद्वर्णेष्वारोपितः । तादृशक्रमविशिष्टा वर्णा एव पदम् । अतः क्रमभेदात्पदभेदः । तद्भेदाद्वाक्यभेदः । तद्भेदाच्चार्थभेद इति । ततश्च कथं तादृशानां वर्णानां व्यापारयोगः, मूर्तद्रव्याश्रितत्वात् । तस्य च । लोके वाय्वादय एव प्रेरका दृष्टाः । किं च कथं पुरुषप्रवृत्तिस्तस्या भाव्या ? तद्विषयत्वादिति चेत्, न, प्रेरणारूपायास्तस्या योग्यतया प्रेर्यपुरुष एव विषयः, न तु भावना, अयोग्यत्वात् । लोके हि पुरुष एव प्रेर्यते । अतो न तस्यास्तद्विषयत्वम् । किं च संबन्धज्ञानस्य वा कीदृशं करणत्वम् ? प्रेरणा भावना चैकप्रत्ययवाच्यतया युगपत्प्रतिपन्ने, न तत्रान्यतरवाच्यवाचकसंबन्धज्ञानादन्यतरोत्पत्तिर्युक्ता । न च वाच्यवाचकसंबन्धज्ञानाद्वाच्योत्पत्तिर्लोके दृष्टा । भावना च त्वन्मते वाच्या । अपि च प्रेरणा क्रिया । तत्फलं हि प्रवृत्तिः । न हि क्रिया स्वफलप्रसवाय करणमपेक्षते । किं तु स्वोत्पत्तय एव उत्पन्ना तु सा स्वयमेव फलं प्रसूते । न हि गमनं संयोगविभागारम्भे करणापेक्षम् । अतो न संबन्धज्ञानस्य करणत्वम् । प्राशस्त्यस्यापि कथमितिकर्तव्यतात्वम् ? । तद्धि पुरुषकर्तृकायामेव पुरुषार्थप्रवृत्तौ तत्करणस्य योग्यतया इतिकर्तव्यता भवितुमर्हति । न तु शब्दकर्तृकायां प्रेरणोत्पत्तौ तत्करणस्यायोग्यत्वात् ।

ननु यत्रयत्रार्थवादश्रुतिस्तत्रास्तु प्राशस्त्यम् । यत्र तु न, तत्र कथम् ? न हि सर्वत्रार्थवादस्समाम्नायते । ननु तत्राप्यतिदेशात् तत्प्राप्तिरिति चेत्, न, प्रतीति-

गौरवात् । ननूपकारमुखेन पदार्थप्राप्तिवत्प्राशस्त्यमुखेन तत्प्राप्तिरिति चेत्, न, अनपेक्षितत्वात् । न ह्युपकारवत्प्राशस्त्यमपेक्षितं, तदन्तरेणाप्यपूर्वसिद्धेः । प्रवृत्तिस्त्विष्टसाधनताज्ञानात् । विधिशक्तिरपि तावतैवोत्तम्यते । कार्यताज्ञानाद्वा । अर्थवादानां तु कत्वीयपदार्थप्राशस्त्यलक्षकतया केवलं विधिविशेषपरत्वमेव, न तु प्रवृत्तिविशेषपरत्वम् । स्तुतश्चास्तुतश्च तावानेव सोऽर्थः, न त्वधिकः । अतिदेशकप्रमाणाभावाच्च । प्रकृतिविकृतिभावो ह्यतिदेशमूलम् । नात्र तत्क्लृप्तिः । किंच अर्थभावनाया भाव्यत्वं, एकप्रत्ययवाच्यत्वात् । तदुक्तम्—

विधिभावनयोश्चैकप्रत्ययग्राह्यताकृतः ।
धात्वर्थात्प्रथमं तावत्संबन्धोऽध्यवसीयते ॥

इति, तदयुक्तम्, उभयोरेकप्रत्ययवाच्यत्वस्यैव दुर्घटत्वात् । ननु सर्वाख्यातानां भावनावचनता करोत्यर्थसामानाधिकरण्येनाध्यवसीयते । लिङादिषु तु प्रेरणामात्रमधिकम् । करोतिश्च कृतिवाचकः । कृतिश्च प्रयत्नः, सैव भावना । 'जानाति' 'इच्छति' इति प्रयुज्य 'करोति', 'प्रयतते', 'प्रवर्तते', 'भावयति', चेति चतुर्णां प्रत्येकं पर्यायतया लोके प्रयोगदर्शनात् । युगपत्प्रयोगे पौनरुक्त्याच्च । तथा हि— ' किं करोति ? ' पचति, ' किमकार्षीत् ? ' ' अपाक्षीत् ', ' किंकरिष्यति ? ' ' पक्ष्यति, ' इति सामानाधिकरण्येन प्रश्नोत्तरदर्शनात् करोत्यर्थस्सर्वाख्यातैरभिधीयते इति गम्यते । प्रश्नोत्तरे च समानविषये, सामानाधिकरण्यं चैकार्थनिमित्तम् । अन्यथा करोत्यर्थप्रश्ने आख्यातानां तदुत्तरत्वानुपपत्तेः । तत्र ' घञादि प्रत्ययप्रयोगे करोत्यर्थानवगमादाख्यातप्रयोगे च तदवगमादाख्यातार्थता निश्चीयते । केवलाख्यातानां प्रयोगानुपपत्तेः प्रकृत्यंशस्य सहप्रयोगमात्रं, न तु स्वार्थविवक्षयेति । तदयुक्तम्, यद्यपि करोतिः प्रयत्नपरः, तथाऽप्यत्र किं करोतीत्यस्य प्रश्नस्य; यदि यत्करोति तत्किमिति करोत्यर्थविषयता स्यात्, तदा पचतीत्यस्योत्तरस्य पाकं करोतीत्यर्थता । न चैवं लोकविवक्षा । किं त्वनवगते हि व्यापारविशेषे प्रश्नः । तत्र चोत्तरं पचतीति तद्विशेषविषयम् । सर्वोऽपि प्रश्नः प्रतिवचनं च सामान्यतो ज्ञाते विशेषतश्चाज्ञाते । अत्र च धात्वर्थगोचरे एव ज्ञानाज्ञाने । ततश्च तद्गोचरे एव ते युक्ते यद्यपि करोतिः प्रयत्नपर एव, तथाऽप्यत्र कस्य चिदभूतस्य भवने अनुकूलस्वभावः करोत्यर्थः, सर्वे च धात्वर्थास्तादृशा इति करोतिना प्रष्टुं निर्देष्टुं च शक्यम् । किं च सप्रयत्नक्रियेषु देवदत्तादिषु ते घटेताम्, निष्प्रयत्नक्रियेषु तु; ' किं करोति ?, रथो गच्छति, '

इत्यादिषु कथम् ? सप्रयत्नेष्वप्यास्ते शेते इत्यादिषु कथन्तराम् ?। व्यापारमात्रविषयत्वे तु सर्वत्रोपपत्तिः, अतो नाख्यातानां करोत्यर्थता।

ननु पचतीत्यस्य विवरणं पाकं करोतीति, तत्रापि प्रकृत्यर्थस्य स्फुटत्वात्प्रत्ययार्थस्यैव, ततः करोत्यर्थमाख्यातमिति चेत्, न, तत्रापि धात्वर्थाक्षिप्तकर्तृगतं पचत्यर्थानुकूलमार्थं प्रयत्नमुपादाय विवरणोपपत्तिः, अतो नाख्यातानां भाववचनत्वम्। किं तु धात्वर्थाक्षिप्तकर्तृसंख्यामात्रवाचित्वम्। यथाऽऽह भगवान् पाणिनिः—

'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति। एतच्च मतद्वयसाधारणं; सर्वाख्यातानां भावनापरत्वम्, लिङादीनां तु; प्रेरणापरत्वं च त्वन्मतेऽधिकम्, अस्मन्मते तु; लिङादीनां कार्यपरत्वं भावनापरत्वं च। किं तु कार्योपसर्जनतया तत्परत्वं, न तु प्राधान्येन, अत एव अस्मन्मते भावना न वाक्यार्थः, किं तु कार्यमेव। न हि कृतिमनभिधाय कार्यमभिधातुं शक्यते, कृतिसंबन्धि हि कार्यम्। नचानेकार्थतादोषः, तथैवावगमात्। ननु दण्डीत्यत्र प्रत्ययो दण्डं नाभिधत्ते, अथ च तद्विशिष्टपुरुषप्रतीतिः। एवमिहापि कृत्यनभिधानेऽपि तद्विशिष्टाभिधानं स्यात्, मैवम्, न ह्यप्रतीते दण्डे तद्विशिष्टपुरुषप्रत्ययः, अस्ति च तत्र प्रकृतिभूतो दण्डशब्दः, स च तत्प्रत्यायकः, न चेह तथा, प्रकृतीनां भावार्थमात्रपरत्वात्। किं च पुरुषो हि चेतनः कार्यं लिङादिभिरवबुध्यते। न चासौ परकृतिसंबन्धि स्वयं कार्यतया बोद्धुमलमिति स्वकीयेत्यभिधानमेषितव्यम्। अतो न दण्डिन्यायावसरः। यद्यपि कर्त्राक्षेपवत्तद्द्वारा प्रयत्नाक्षेपोऽपि संभवेत्, तथाऽपि तदानीमपूर्वं तदधीनसिद्धिकं नावगम्यते, प्रयत्नाभिधाने तु तदवच्छिन्नतयाऽभिधीयमानं तदायत्तसिद्धिकमवगम्यते, नान्यथा, न च कृत्यनवच्छिन्नं स्वरूपमात्रेणाभिहितमपूर्वं कृतिमाक्षिपेत्, पूर्वमवगतसंबन्धं हि वस्तु वस्त्वन्तरेणाक्षिप्यते, न च शब्दमन्तरेणापूर्वस्य प्रयत्नसंबन्धे कारणमस्ति, अतः कथं तदाक्षेपकम् ? कृतिसाध्यैकस्वभावस्यापूर्वस्य स्वरूपेणाभिधानमप्यशक्यम्। अतः कार्याभिधायिनां लिङादीनां कृत्यभिधानमवर्जनीयमेव, किं तूपसर्जनतयेति सिद्धम्।

'अपरे त्वभिधाभावनामाहुरिति श्लोकार्थानुगुण्यं पश्यन्तः प्रेरणात्मको लिङादिव्यापार एव विधिरित्याहुः। न चात्र प्रमाणाभावः, सर्वशब्दानामभिधाव्यापाराङ्गीकारात्। व्युत्पन्नस्य शब्दास्तावदर्थप्रत्यायकाः, अस्ति च तत्रार्थप्रतीत्युन्नेयोऽभिधाऽभिधानो व्यापारः, कोऽसौ ?, तत्तच्छब्दगोचरं ज्ञानं, तत्तच्छब्दजनितो वा

संस्कारः, तद्योगी हि शब्दोऽर्थप्रतीतिं जनयति । तदुक्तम्—'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानं, पूर्वपूर्ववर्णसंस्कारसचिवोऽन्त्यो वा वर्णो वाचकः' इति । यद्वस्तु यमेवागन्तुकधर्मं प्राप्य कार्याय पर्याप्तं, स एवागन्तुकधर्मस्तस्य व्यापार इति ज्ञानसंस्कारयोर्न शब्दव्यापारत्वानुपपत्तिः ।

ननु ज्ञानमेवाभिधाव्यापारश्चेत्, ज्ञानं प्रति कर्मीभूतश्शब्दः कथमेनं व्यापारमपेक्ष्य करणं स्यात्? देवदत्तश्शब्देनार्थमवगच्छतीति हि प्रयोगो दृश्यते?, उच्यते—न हि व्यापाररूपमात्रापेक्षया कर्तृकर्मकरणादिकारकव्यवस्था, किं तु व्यापारस्वरूपैक्येऽपि तस्यैव व्यापारस्य तत्तत्फलावच्छेदमपेक्ष्य । तथा हि—यदा तु तदेव शब्दकर्मकं ज्ञानमर्थप्रतिपत्तिलक्षणफलावच्छिन्नं, तेन च शब्दो व्याप्यते, तदाऽन्यार्थप्रवृत्तव्यापारव्याप्यत्वाच्छब्दः करणं, क्रियाफलाश्रयत्वात् । अर्थस्तु कर्म, तच्च ज्ञानं तदानीमभिधेति व्यपदेशं लभते, तत्र तस्य व्युत्पत्तेः । यदा तु व्यापारं प्रति स्वातन्त्र्यविवक्षा, तदा कर्ता शब्दोऽर्थमभिधत्ते, यदा तु स एव शब्दो ज्ञानेन विषयीक्रियते, तदाऽर्थप्रकाशलक्षणफलभाक्छब्दः कर्म, शब्दं जानाति । न हि तदानीं ज्ञानमभिधाव्यपदेशभाक् । किं तु ज्ञानमित्येवोच्यते । अभिधाशब्दस्य तत्राव्युत्पत्तेः परशुवत् । यथा उद्यमननिपतनं प्रति कर्मीभूतः परशुः, यदा त एवोद्यमननिपतने द्वैधीभावलक्षणफलावच्छिन्ने, ताभ्यां च परशुर्व्याप्यते, तदा अन्यार्थप्रवृत्तव्यापारव्याप्यत्वात्परशुः करणं, क्रियाफलाश्रयत्वात् । काष्ठं तु कर्म, ते चोद्यमननिपतने तदानीं छिदिव्यपदेशं लभेते । तत्र तस्य व्युत्पत्तेः, यदा तु तमेव व्यापारं प्रति स्वातन्त्र्यविवक्षा, तदा कर्ता परशुः, काष्ठं छिनत्तीति । यदा तु त एवोद्यमननिपतने ऊर्ध्वाधोदेशसंयोगलक्षणफलावच्छिन्नवाचिभ्यामुद्यच्छतिनियच्छतिभ्यामभिधीयेते तदा तु तत्तत्संयोगफलभाक्परशुः कर्म, परशुमुद्यच्छति नियच्छतीति । तस्मात्तत्तद्धातुवाच्यानां व्यापाराणां प्रातिस्विकस्वरूपैक्येऽपि तत्तत्फलावच्छेदभेदात्तत्कारकव्यवस्थाहेतुत्वं तत्तच्छब्दवाच्यत्वं च द्रष्टव्यम् । कारकव्यवस्थाया व्यापारस्वरूपमात्रापेक्षित्वे चलत्यभिहिता क्रिया गच्छतीत्यभिहितेव सकर्मिका स्यात् । गच्छतिर्वाऽकर्मकस्स्यात् । प्रयोगव्यवस्था च न स्यात् । एवं संस्कारलक्षणेऽप्यभिधाव्यापारे यथासंभवं योज्यम् । तत्र कर्तृकर्मकरणान्येव परस्परप्रविभक्तानि कारकाणि । क्रियायां स्वतन्त्रः कर्ता । क्रियाफलशालि कर्म । अन्यार्थप्रवृत्तक्रियाव्याप्यं करणमिति । संप्रदानापादानाधिकरणानि तु कर्त्रादिकारकसङ्कीर्णस्वभावानि । तथा हि—कर्त्राश्रयः कर्माश्रयो वाऽधिकरणम् । देवदत्तः कुटे आस्ते, स्थाल्यामोदनं पचति, इति । कर्मोद्देश्यं तु संप्रदानम् । उपाध्यायाय

गां ददाति, इति । कर्तृकारकावधिमात्रं त्वपादानम् । वृक्षात्पर्णं पतति, इति यथा-संभवं द्रष्टव्यम् ।

अस्तु सर्वशब्दानामभिधाशब्दवाच्यो व्यापारः, ततः किं ? इदमुच्यते—तत्र प्रकृत्यंशस्येव प्रत्ययांशस्यापि तादृशो व्यापारः समस्त्येव, लिङादीनां तु योऽसौ व्यापारस्स एव विधिः । स च पुरुषप्रवृत्तिभवनफलत्वाद्भावनेति गीयते । तथा च भवनफलभाक्प्रवृत्तिः कर्म, प्रवृत्तिं भावयतीति, लिङादिस्तु पूर्ववत्करणं कर्ता वा स्यात् । यदा तु प्रवृत्त्यवच्छिन्नस्स एव व्यापारः प्रवर्तयतिनाऽभिधीयते तदा प्रवृत्तिफल-भाक्पुरुषः कर्म, पुरुषं प्रवर्तयति, इति । तथाचैक एव लिङादीनामभिधाव्यापारः तत्तत्फलावच्छेदभेदाद्भावना प्रवर्तनेत्युच्यते ।

ननु कथं लिङादीनां पुरुषप्रवर्तकत्वम् ? न हि कश्चिदभिधामात्रावगमात्प्र-वर्तते, समीहितसाधनताऽवगमाधीनत्वात्तस्याः । तदभिधाने च संविद्विरोधात् ? सत्यं, साधनत्वं प्रवर्तकम् । न त्वस्य लिङाद्यभिधेयत्वं, येन विरोधस्स्यात् । प्रत्यय-श्रवणानन्तरं प्रवृत्तिश्च दृश्यते । तस्माद्यदभिधाने सा संभवति तदभिधेयम् । प्रवर्तना चाभिधेया । तदभिधाने तत्संभवात् । प्रवृत्तिहेतुता च प्रवर्तना । सा च प्रवृत्तेरिष्टसाधनता-ज्ञानमन्तरेण न संभवतीति प्रेरणात्मको विधिस्समानप्रत्ययवाच्याया भावनाया इष्टसाधनत्वमपि कल्पयति । अतो लिङादिव्यापारस्य पुरुषप्रयत्नभवननिमित्तत्वा-द्भावनात्वम् । तत्प्रवर्तकत्वात्प्रवर्तनात्वं च युक्तम् । एवंविधविध्यवरुद्धभावना पुरुषार्थ-भावनेति निश्चीयते । तस्यैव भाव्यत्वात् । न ह्यपुरुषार्थफलस्य व्यापारस्य प्रवर्तना-रूपविध्यन्वयस्संभवति । निष्फले तदनुपपत्तेः । अतो भावनाया एव प्रथमं विधि-संस्पर्शाद्विधेयत्वं, तद्द्वारा च तदितरेषां करणेतिकर्तव्यतानाम् । पश्चात्फलस्य तु भाव्यतया साध्यत्वेऽपि चोदनाप्रतिपाद्यतया चोदनालक्षणत्वेऽपि न विधेयत्वम् । तत्र विधिसंस्पर्शमन्तरेण रागादेव प्रवृत्तिसंभवात् । विध्यनुष्ठाप्यत्वं हि विधेयत्वम्, अप्र-वृत्तप्रवर्तकश्च विधिः, अत एव फलस्याविधेयत्वाच्छ्येनाग्नीषोमीयवैषम्यमपि । अवशिष्टं सर्वं शास्त्रार्थसङ्क्षेपे व्यक्तीभविष्यति । तदेवमभिधाव्यापारमेव प्रवर्तना-रूपेण लिङादयोऽभिदधति । तद्बलादेवेष्टसाधनत्वमपि बोधयेयुः । एतदेवाभि-प्रेत्योक्तम्——

" कर्तव्यतावचनः प्रत्ययः, श्रेयस्साधनता ह्येषां नित्यं वेदात्प्रतीयते, इति

च "॥ उभयत्रापि भावनाद्वये आकाङ्क्षात्रयपरिपूर्तिः पूर्ववदिति। अस्मिन्मते स्वव्यापाराभिधानं दुरुपपादमिति मन्वाना आचार्यमततत्त्ववेदिनः प्राहुः—

इष्टसाधनत्वमेव विधितत्वम्, न च संविद्विरोधः, स्वरूपेणानभिधानात्। प्रवर्तनारूपेण तु शब्दोऽभिधत्ते प्रवृत्तिहेतुश्च धर्मः प्रवर्तना। स च प्रेषणमध्येषणमभ्यनुज्ञानमिष्टसाधनत्वं च। तेषु चतुर्ष्वपि प्रवर्तनासामान्यमनुगतम्। ततश्च तदभिदधता लिङादिशब्देन निर्विशेषस्य तस्यासंभवाद्वेदे च पुरुषधर्माणां प्रैषादीनामसंभवात्पारिशेष्यात्कर्तुरिष्टसाधनतैव बोध्यते। सामान्यवाचित्वान्नानेकार्थत्वं, लाघवं च। नाऽत्र स्वव्यापाराभिधानदोषः, तदतिरेकात्प्रवर्तनायाः। नापि संविद्विरोधः, इष्टसाधनत्वातिरेकात्तस्याः। न सहप्रयोगविरोधश्च, प्रवृत्तिनिमित्तभेदात्। साधनशब्दस्तु साधनत्वमेव साक्षादभिधत्ते, लिङादयस्तु तदेव प्रवर्तनावेषेणाभिदधति। तस्मात्प्रवर्तनावेषापन्नं भावनागतेष्टसाधनत्वमेव लिङादिवाच्यं विधितत्वमिति सिद्धम्। अस्यास्तु पुरुषप्रवृत्त्यर्थं प्रवृत्तेः प्रवृत्तिस्स्वर्गादिस्थानीया भाव्या। प्रथमं विधिप्रत्ययप्रतिपन्नायाः प्रवृत्तेः पश्चादुत्पत्त्यविरोधात्। समीहितफलसाधनत्वज्ञानं परार्थप्रवृत्तव्यापारजन्यतया यागादिवत्करणम्। प्राशस्त्यज्ञानं त्वितिकर्तव्यता। श्लोकानुगुण्यमपि। तथा हि तस्यायमर्थः—अभिधीयत इत्यभिधा प्रवर्तना। सैव पुरुषप्रवृत्तिं भावयत्युत्पादयतीति भावना, तामाहुरिति। तस्माद्विध्यवरूद्धा भावनैव वाक्यार्थः। सैव शास्त्रप्रमेयमिति सिद्धम्।

अत्रेत्थं शास्त्रार्थान्वयप्रकारसंक्षेपः—लिङादीनां भावना विधिश्चोभयमप्यर्थः। तत्र भावना—प्रयत्नः, विधिस्तु पूर्वोक्ता शब्दभावना प्रवर्तनात्मिका, तयोरेकप्रत्ययोपादानात्प्रथममन्वयः। स च भाव्यभावकभावेनोत्पाद्योत्पादकभावेन पर्यवस्यति। विध्यन्वयबलाद्भावनायास्समीहितसाधनत्वं चावर्जनीयम्। एवं च तस्यास्स्वत आकाङ्क्षितं भाव्यं फलमेवावतिष्ठते। ततश्च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र भावना समानपदोपादानात्सन्निहितमपि धात्वर्थमतिलङ्घ्य पदान्तरोपात्तं फलमेवावलम्बते। ततश्च भाव्यान्विता भावना तत्सिध्द्यर्थं करणमपेक्षते। तथा च धात्वर्थः करणतयाऽन्वेति। तस्य च क्षणिकस्य कालान्तरभाविफलसाधनत्वमपूर्वमन्तरेण न संभवतीत्यवान्तरव्यापारतया तत्कल्प्यते। ततश्चोभयान्विता सा कथमनेन फलं कुर्यादितीतिकर्तव्यतामपेक्षमाणाऽवतिष्ठते। इत्थमधिकारवाक्ये प्रधानभावनायामाकाङ्क्षात्रयवत्यां 'आग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां

च, ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायाम्, अग्नीषोमीयमेकादशकपालं पूर्णमासे ' उपांशुयाजमन्तरा यजति, इति तत्सन्निधौ यानि वाक्यान्याम्नातानि तेषु द्रव्यदेवतासंबन्धस्य मानान्तराघ्राततया तद्विधिप्रत्यये कल्पिते तेन च संबन्धेन यागे कल्पिते सत्येवं वाक्यार्थस्संपद्यते—एतत्कालीनैर्यागैः किंचिच्छ्रेयो भावयेदिति। एताश्चावान्तरभावनाः तत्किं श्रेयो भाव्यमिति विशेषमाकाङ्क्षमाणा एवाऽवतिष्ठन्ते। यानि च तत्र ' व्रीहिभिर्यजेत, यवैर्यजेत ' इत्यादीनि वाक्यानि तेष्वपि व्रीह्यादिविशिष्टेन यागेन किंचिच्छ्रेयो भावयेदिति भावनाभाव्यविशेषाकाङ्क्षिण्य एव। यानि च ' समिधो यजति, ' तनूनपातं यजति ' इत्यादिप्रयाजादिवाक्यानि तेष्वपि समिदादिनामकैर्यागैः किंचिच्छ्रेयो भावयेदिति। एताश्चावान्तरभावनाः तत्किं श्रेय इति भाव्यविशेषमाकाङ्क्षमाणा एवावतिष्ठन्त इति स्थितिः। यानि तु ' व्रीहीनवहन्ति, व्रीहीन्प्रोक्षति, तन्डुलान्पिनष्टि, पुरोडाशं प्रथयति, कपालेषु श्रपयति ' इत्यादीनि तेष्वपि द्वितीयाश्रुत्या व्रीह्यादीनां भाव्यत्वावगमादवघातादिभिर्व्रीह्यादीन् भावयेदिति वाक्यविपरिणामेऽपि व्रीहीणामपुरुषार्थतया समीहितत्वानवगमात् भाव्यांशे भावनास्साकाङ्क्षाः। तथा ' भिन्ने जुहोति, ' स्कन्ने जुहोति, ' इत्यादिषु प्रायश्चित्तवाक्येष्वपि भिन्नादिशब्दानां यौगिकत्वेन प्रकृतनिवेशितया प्रकृतिकपाले भिन्ने हविषि च स्कन्ने सति होमेन समीहितं भावयेदिति साकाङ्क्षा एव भावनाः। एवं च परस्परमाकाङ्क्षावशात्फलवाक्येनेतरेषामेकवाक्यतया युगपदन्वये प्रसक्ते तत्र प्रथमादिवाक्येषु कालसंबन्धप्रतीतेः दर्शपूर्णमासशब्दवाच्यत्वसंभवादिदमधिकारवाक्येनैकवाक्यं भवति। आग्नेयादियागषट्केन दर्शपूर्णमासनामकेन फलं भावयेदिति। ' व्रीहिभिर्यजेत ' इत्यादिवाक्येषु तु यागद्रव्यलाभेऽपि देवताया अलाभेन पृथग्यागत्वानुपपत्तेः फलवाक्येनैकवाक्यतायां वाक्यद्वयेऽप्येक एव यागः फलितो भवति। तस्य च यागस्य फलवाक्य एव श्रेयस्साधनत्वेन समीहिततया प्राप्तत्वाद्विधिवाक्यगता भावना समानपदोपात्तं तमेव यागं भाव्यतयाऽवलम्बते। व्रीहींस्तु करणतया। ततश्चैवं वाक्यार्थो भवति। यो दर्शपूर्णमासयागः स्वर्गसाधनत्वेन निरूढः, तं व्रीहिभिः भावयेदिति। एवं चोत्पत्तिशिष्टपुरोडाशावरुद्धे यागे व्रीहीणां साक्षात्साधनत्वेनानन्वयादर्थात्तत्प्रकृतितयाऽन्वयः स्यात्। अवहननादिवाक्येषु तु दर्शपूर्णमासवाक्यैकवाक्यतायां व्रीहिभिर्यजेतेत्यादिविनियोगवाक्यपर्यालोचनया व्रीहीणां दर्शपूर्णमासशेषत्वप्रतीतेः समीहितत्वनिर्वाहाद्दर्शपूर्णमाससंबन्धिनो व्रीहीनवहननेन भावयेदिति वाक्यार्थो भवति। अत एव यत्र द्रव्यविनियोगो नास्ति

तत्र समीहितत्वानिर्वाहाद्द्वितीयाश्रुतौ सत्यामपि न द्रव्यभाव्यता, किं तु करण-त्वमेव क्रियां प्रति भवति । यथा ' सक्तून् जुहोति ' इति । एवम्, उलूखलमुसलाभ्यामवहन्ति, इत्यवहननाङ्गवाक्येष्वपि व्रीहीनवहन्तीत्यनेन परम्परया दर्शपूर्णमासशेषत्वेनावहननस्य विनियोगेन समीहितत्वनिर्वाहात्तदेकवाक्यतायां दर्शपूर्णमाससंबन्धितया निरूढमवहननमुलूखलमुसलाभ्यां संपादयेदिति वाक्यार्थो भवति । एवं व्रीहिशब्देन दर्शपूर्णमाससंबन्धित्वस्यैव लक्षितत्वाद्यवानामपि तत्संब-न्धित्वाविशेषात्तेष्वप्यवहननमुपदेशत एव भवति । एवं ' दास्यवहन्ति पत्नीव ' इत्या-दिवाक्यान्वयोऽपि निरूढानिरूढभावेन द्रष्टव्यः । समिदादिवाक्येषु तु फलवाक्यैकवा-क्यतायां सत्यामेवं वाक्यार्थो भवति—समिदादियागैः फलभावनां भावयेदिति । तस्याश्च भाव्यत्वं साक्षान्न संभवतीत्यवान्तरापूर्वद्वारा तत्करणोपकारमुखेन पर्यवस्यति । भिन्ने जुहोतीत्यादिषु तु प्रयाजादिन्यायेन फलभावनाया भाव्यत्वेनान्वये सति तस्यां भाव्यत्वं स्ववाक्यश्रुतनिमित्तसंबन्धानुसारेण निमित्ते सत्युपजायमानस्य क्रतुवैगुण्यस्य प्रत्यवायस्य परिहारेण निर्वहतीति कल्प्यते । अत एवैतेषु प्रयाजादिष्विव न यागमात्राधिकृतोऽधिकारी, नाऽपि स्वतन्त्रनैमित्तिकेष्विव केवलनिमित्तवान् । अपि तु यागेऽधिकृतो निमित्तवानित्यधिकृताधिकारित्वम् । तथा ' आज्यमुत्पुनाति ' ' पयो दोग्धि ' ' दध्यातञ्च्यात् ' इति, ' शाखां छिनत्ति ', ' शाखया वत्सानपाकरोति ' इत्यादिवाक्येष्वपि अनेनैव प्रकारेणान्वयो द्रष्टव्यः । अत एवाज्यौपधपयोधर्माणामुत्पवनावहननातञ्चनदोहनादीनां सन्निपातिधर्माणां प्रधान-वाक्यैकवाक्यताया दर्शपूर्णमाससंबन्धित्वलक्षणाया अविशेषेऽपि श्रुताज्यव्रीह्यादि-निरूढकारकद्वाराऽन्वयस्यापरित्यागादवान्तरापूर्वभेदाच्चासङ्करेणान्वयसिद्धिः । प्रयाजा-दीनां त्वारादुपकारिणामुपकारवैषम्याभावात्सर्वकरणशेषतयाऽन्वयः । अत एव तेषां तन्त्रेण सकृदेवानुष्ठानम् । तथा ' यस्य पर्णमयी जुहूः, यस्य खादिरस्स्रुवो भवति ' इत्याद्यनारभ्याधीतवाक्येष्वपि प्रधानभावनाकाङ्क्षायाः प्राकरणिकैरेवाङ्गैरुप-शमेऽपि स्वाकाङ्क्षावशादव्यभिचरितदर्शपूर्णमासक्रतुसंबन्धित्वेन जुह्वादीनां समीहित-त्वाद्दर्शपूर्णमाससंबन्धिनो जुह्वादीन् पर्णखदिरादिद्रव्येण भावयेदिति सर्वक्रतुप्रकृति-भूतदर्शपूर्णमासयोरेवान्वयः । एवं च प्रोक्षणावहननपेषणप्रधानकपालश्रपणचतुरवदा-नादिसंस्कृतेन च व्रैहेण पुरोडाशद्रव्येण उत्पवनदोहनातञ्चनादिसंस्कृतैश्चाज्यदध्या-दिभिर्यथायोगं संपादितेन प्रयाजाद्युपकृतेन प्रायश्चित्तप्रशमितवैगुण्येन प्रयोगदशायां तत्तन्मंत्रस्मारितपदार्थवर्गेण दर्शपूर्णमासशब्दवाच्येन यागषट्केन फलं भावयेदिति

महावाक्यार्थस्संपन्नो भवति । एवं प्रकृत्यात्मकयोः पशुसोमयागयोरपि प्रधानाङ्गवाक्यानामन्योन्यान्वयप्रकारो द्रष्टव्यः । अत्र प्रथमं प्रधानवाक्ये भावनायाः प्रवर्तकैकरसविध्यन्वये प्रतीतेऽपि केवलायास्तस्या अनुष्ठातुमयोग्यतया श्रुत्यादिभिर्योग्यांशत्रयान्वयपर्यन्तं सा न पर्यवस्यति। इयमवस्था विधिप्रक्रम इत्युच्यते । तथा च योग्यतया वाक्येन भाव्यान्वयः, एकपदोपादानश्रुत्या करणान्वयः, यथायोग श्रुतिप्रकरणादिभिरितिकर्तव्यतान्वयः । तत्रारादुपकारकाङ्गवाक्येषु विध्यन्वितायाः प्रयाजादभावनायाः प्रकरणेन साक्षात्प्रधानभावनाया एव भाव्यतयान्वयः । सन्निपातिषु तु प्रकरणसहितैः श्रुत्यादिभिः प्रधानसंबन्धिनामेव व्रीह्यादीनां भाव्यतयान्वयः । उभयत्रापि समानपदोपादानेन धात्वर्थस्यैव करणतयाऽन्वयः । द्रव्यगुणजातिवाक्येषु धात्वर्थस्य भाव्यत्वात् तृतीयाश्रुत्या द्रव्यादीनामेव करणतयाऽन्वयः । तत्राङ्गेष्वितिकर्तव्यतान्वयस्तु प्रायिक एव । अत्र सर्वत्र साक्षाद्भावनान्वितस्य विधेस्तदंशान्वयस्तु भावनाद्वारक एव । तत्र भाव्यांशस्य साक्षात्परम्परया वा समीहिततया, स्वयमेव तत्र रागात्प्रवृत्तेः, अप्रवृत्तप्रवर्तकविध्यन्वयायोगात् न तत्र विधिव्यापारः । करणेतिकर्तव्यतांशयोरेव भावनाद्वारा तद्व्यापारः । अत एव ‘ श्येनेनाभिचरन्यजेत ’ इत्यभिचारलक्षणस्य हिंसात्मकस्याविधेयतया ‘ न हिंस्यात् ’ इति निषेधगोचरतया श्येनस्य प्रत्यवायकरणत्वम् ।

स च विधिरुत्पत्तिविनियोगाधिकारप्रयोगभेदात्क्रमेण चतुरवस्थो भवति । तत्र प्रवर्तनैकस्वभावत्वाद्विधेः प्रयोजकत्वं स्वाभाविकम् । अन्यास्तु तिस्रोऽवस्थास्तदनुपपत्त्या तत्सिध्यर्थं भवन्ति । तथाहि—विधिः प्रतीतस्सन् प्रथमं स्वस्याप्रवृत्तप्रवर्तकत्वसिध्यर्थं श्रुत्यादिभिर्भावनाविशेषणतया प्रतिपन्नानां धात्वर्थद्रव्यादीनां प्रमाणान्तराप्राप्तिं कल्पयति । प्रमाणान्तरप्राप्ते तु तेनव प्रवृत्तिसिद्धेः । स्वस्य प्रवर्तकत्वशक्तिविलोपात् । द्रव्यादीनां तु सामर्थ्यादेव क्रियासाधनतया पक्षे मानान्तरप्राप्ततया नियमांशेऽप्राप्तिं कल्पयति । तथा हि—‘ यजेत ’ इत्यादौ यत्किंचिद्द्रव्यमाध्यतया व्रीह्यादिद्रव्यस्य प्राप्तावपि नियमेन प्राप्तिं प्रमाणान्तरा प्राप्तां कल्पयति । एवं गुणादिविधिष्वपि । यत्र तु क्रियापि प्राप्तैवावहननादिषु तत्रापि नियमं कल्पयति । तस्यां दशायामुत्पत्तिविधिरित्युच्यते । अस्य च शब्दान्तराभ्यासादयः सहायाः । यदा स्वफलसाधनेषु तेषु पुरुषस्य प्रवर्तयितुमशक्यतया तत्साधनता कल्पयते, तदा विनियोगविधिः । विनियोगो नाम, अङ्गाङ्गिभावावगमः । समीहितमङ्गि । तत्साधनमङ्गम् । तत्र

च फलभावनायास्साक्षात्फलसाधनतया तत्संबन्धादितरेषां करणेतिकर्तव्यतानां परम्परया तत्र च विनियोगे श्रुत्यादयस्सहायाः । श्रुत्यादिसहितो विधिरेव विनियोग विधिरित्युक्तं भवति । यदा च फलसाधनत्वबलेनानुष्ठेयमिति बुद्धिर्भवति । तदाऽधिकारविधिः । विध्यधीना ह्यनुष्ठेयबुद्धिः, यदा त्वनुष्ठापयति तदा प्रयोगविधिरिति । अस्य चार्थवादजन्यप्राशस्त्यं मन्त्रभावावगतपदार्थस्मरणं श्रुत्यर्थपठनाद्यवगतक्रमः कालादयश्च सहायाः । अत्र तु सर्वेषामेव विधीनां प्रवर्तकैकरसतया स्वत एवावस्था चतुष्टयकल्पनासामर्थ्येऽपि विध्यन्तरसिद्धमुत्पत्त्यादिकं संभवति चेत्तदेवाश्रित्य स्वयं प्रवर्तते । न तु तत्कल्पयति । यथा दर्शपूर्णमासविधिराग्नेयादीन्, नियोगविधिरपि स्वकर्मणामन्यतो विनियोगसिद्धिः । स्वयं तदुत्पत्तिमात्रपरः न तु विनियोगपरः । यथा वा अङ्गवाक्येष्वपि यथार्ह श्रुत्यादिसहितैः स्वस्वविधिभिरेवोत्पत्तौ सिद्धायां साक्षात्परम्परया वा प्रधानभावनाशेषतया विनियोगे च सिद्धे प्रधानभावनासंबन्धात्तद्वारा प्रधानविधिशक्तेरेवाङ्गेषु सङ्क्रमात्तेनैवाङ्गे अधिकारानुष्ठानयोस्सिद्धेः न पृथगङ्गविधयोऽधिकारप्रयोगपराः । प्रधानविधिरप्यङ्गोत्पत्तेरङ्गानां स्वशेषतया विनियोगस्य चाङ्गविधिभिरेव सिद्धत्वात् तदुपजीव्य स्वयं प्रयोगाधिकारमात्रपरः । प्रधानस्य फलशेषतया विनियोगस्य त्वन्यतोऽसिद्धतया स्वयमेव करोति । यत्र तुत्पत्त्यादयो न विध्यन्तरसिद्धास्तत्र स्वयमेव स्वसंबन्धिनामुत्पत्त्यादिचतुष्टयं करोति—यथा विकृतौ 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति विधिः; नात्राग्नेयादिवत्, 'सौर्यश्चरुर्भवतीति' पृथगुत्पत्तिः श्रूयत इति तामपि कल्पयति । इत्थमंशत्रयान्वितायां भावनायां प्रतिपन्नायां तस्यानुष्ठानयोग्यतया तत्र विधिः पुरुषं प्रवर्तयतीति प्रथमप्रतीतो विधिभावनान्वयस्तदा पर्यवसितो भवति । इयं च दशा विधिपर्यवसानमित्युच्यते । अत्र भावनाया एव प्रथमं विधेयत्वम् । तद्द्वारा क्रियायाः तद्द्वारा च द्रव्यादीनाम् । अत्र च यथा यथा प्रधानं विधिः फलसिध्यर्थं करणमङ्गानि चानुष्ठापयति तथा तथा फलगोचराऽपि विध्याक्रान्ता प्रधानभावना स्वयं साक्षात्फलं निष्पादयितुमशक्नुवाना तत्रतत्रावतरन्ती तत्तन्निष्पादयति, तदानीमङ्गविधीनां तत्तद्भावनानां च न प्रवर्तकत्वं नैव निष्पादकत्वं चेति । इत्थं प्रकृतावन्वयक्रमः । विकृतिषु तु भाव्यकरणान्वितायां विकृतिभावनायां प्रतिपन्नायां कथमनेन फलं साधयेदिति करणोपकाररूपेतिकर्तव्यताकाङ्क्षायां वचननामधेयचोदनालिङ्गैरतिदेशप्रमाणैः प्रथमं प्राकृत उपकारे तदनु तज्जनकेषु पदार्थवर्गेषु समर्पित........पदार्थानां वैकृतभावना-शेषत्वमपि । 'सोमेन यजेत' इत्यत्र यागविधिनैव पदान्तरोपस्थितस्य सोमस्यापि शेषत्ववत्प्रधानविधित एव

भवति । प्रकृतावङ्गविधिभिः प्रकृतिभावनाशेषत्वस्यैव प्रतीतेर्विनियोगस्य न विधिप्रमाणकत्वात् वैकृतप्रधानविधिरेव । नाङ्गानां वैकृतभावनाशेषत्वेन विनियोजकः । प्रकृतौ अङ्गप्रधानयोः परस्पराकाङ्क्षावशादन्वयः । विकृतौ त्वङ्गानां प्राकृतसंबन्धेनैव निराकाङ्क्षतया प्रधानाकाङ्क्षावशादेव परस्परान्वयः । उद्दिष्टेषु त्वङ्गेषु प्रधानस्य प्राकृताङ्गैरेव निराकाङ्क्षतयाऽङ्गाकाङ्क्षावशादेवान्वयः । प्रकृतौ प्रधानभावनायाः प्रथमं करणोपकाररूपेतिकर्तव्यताकाङ्क्षायामपि तदुपस्थापकशब्दाभावाच्छ्रुतैरङ्गैः प्रथमं शेषशेषिभवेनान्वये सति तन्निर्वाहार्थं पश्चादुपकारकल्पनम् । विकृतौ तूपकारस्य पदार्थानामप्युपस्थापकशब्दाभावादाकाङ्क्षाक्रमेण प्रथममुपकारान्वयः । पश्चात्पदार्थानाम् । अत एव करणोत्पत्त्यपूर्वैः परमापूर्वं जनयितव्ये सामग्रीमेळनरूपस्य सर्वाङ्गनिष्पाद्यस्याखण्डस्योपकारस्य प्रथममतिदेशः । पश्चादारादुपकारेष्वपूर्वरूपाणां सन्निपातिषु तु कारककिंचित्काररूपाणां द्रव्येषु तु साक्षात्क्रियानिष्पत्तिरूपाणामवान्तरोपकाराणामतिदेशः । तदनु पदार्थानाम् । यत एवोपकारपूर्वकः पदार्थातिदेशः अतस्तत्सिध्यर्थं देवतान्तरद्रव्यान्तरमन्त्रान्तरयुक्तासु विकृतिषु मन्त्रसंस्कारसाम्नां वकृतदेवताद्रव्यमन्त्रशेषत्वलक्षणप्रयोगविकार ऊहस्सिद्धो भवति । यथा ' अग्नये जुष्टं निर्वपामि ' इति मन्त्रस्य सूर्ययुक्तायां विकृतौ तत्पदप्रक्षेपेण वैकृतदेवतासंबन्धः । तथा व्रीहियुक्तानामवहननप्रोक्षणादीनां च संस्काराणां नैवारचरुयुक्ते यागे नीवारद्रव्यसंबन्धः । तथा गीतिविशेषरूपाणां साम्नामृगन्तरयुक्ते योगे तत्संबन्धः । यथा कवतिषु रथन्तरं गायतीति अभवतिऋगाश्रितस्य रथन्तरलक्षणस्य गीतिविशेषस्य कवतिऋक्संबन्धः । अस्मिन्नपि ! उपाप्रकृतिषु यैरङ्गैर्येन प्रकारेणोपकारस्सम्पादितः तैस्तेनैव प्रकारेण देवतान्तरादियुक्तां विकृतिमुपकुर्यादित्येवंरूपचोदकवाक्यसहायो वैकृतविधिरेव प्रमाणम् । यत्र तु कृष्णलादिष्ववहननेन तथा चरुषु पेषणेन प्राकृत उपकारस्संपादयितुमशक्यः, तथा दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति प्रत्याम्नानं, तथा नार्षेयं वृणीत इति प्रतिषेधश्च, तत्र सामान्यप्रवृत्तस्यापि चोदकस्य सङ्कोचात्, विकृतावन्वयलक्षणो बाधस्सिद्धो भवति ।

, एवं प्रकृतिभावनानां षड्विधेनोपदेशेनांशत्रयान्वये विकृतिभावनानां तु भाव्यकरणांशयोः स्ववाक्यश्रुतिप्रमान्वये श्रुत्यादिभिरेवोपदिष्टैश्चाङ्गैरन्वये सति सर्वाङ्गविशिष्टास्तास्ता भावनाः प्राकृतो वैकृतश्च विधिश्रुत्यर्थपठनादिप्रमाणावगतक्रमेण बहुकरणेषु यागेष्वारादुपकारकाणामुपकारैक्यात्तन्त्रेण देशकालकर्तृभेदे तु तेषामेवावृत्त्या

तत्तत्फलकामिनं प्रत्यवायपरिहारपरं पुरुषं वानुष्ठापयतीति । तस्मात्प्रेरणात्मा लिङादिप्रत्ययवाच्यो विध्यर्थोऽनुष्ठापकतया कृत्स्नशास्त्रप्रमेयमिति सिद्धम् । अयं शास्त्रार्थसंक्षेपः, इत्थमेव न्यायमालाव्याख्याने नायकरत्नेऽस्माभिरभिहित इति ।

तदेतदनुपपन्नं—यदि त्वभिहितो विधिर्लिङादिप्रत्ययवाच्यः, स्यादेवम् न त्वेतदेवम् । लिङादीनां कार्यपरत्वात् । तत्तद्वाद्युपवर्णितं विधिपरत्वं तावत्तदीयैरेवोपेक्षितम् । दूषितं चास्माभिः । यस्तु चरमः पक्षः भावनागतेष्टसाधनत्वमेव प्रवर्तनावेषेण लिङादयोऽभिदधतीति सोऽप्यनुपपन्नः—लिङादीनां भावनावाचित्वस्याधस्तादेव निराकृतत्वात् । प्रवर्तनावेषेण अभिधानं तु दूरे, अत एव तदभिमतशास्त्रार्थान्वयप्रकारोऽप्यनुपपन्नः । अन्यथाऽन्वयश्च वक्ष्यते । अतोऽन्यदेव शास्त्रप्रमेयं विधितत्वं च मानान्तरापूर्वमपूर्वात्मकं कार्यम् । तत्रैव लिङादीनां व्युत्पत्तेः । ननु कथं तत्र व्युत्पत्तिः प्रत्यक्षादिप्रमाणगोचरेऽर्थे वाक्येन प्रतिपादिते सति तत्र व्यवहाराद्व्युत्पत्तिर्युक्ता । मानान्तरागोचरे त्वपूर्वे कथं व्यवहारः कथन्तरां तत्र व्युत्पत्तिः कथन्तमां च लिङादयस्तत्पराः ? न च वेदवाक्यादेव तदवगमः, इतरेतराश्रयत्वात् । तस्य बोधकत्वे सति तत्र व्यवहाराच्छक्तिग्रहः । तद्ग्रहे च बोधकत्वमिति । किं च क्रियाकार्यपरत्वे शक्तिकल्पनालाघवमप्यस्ति तथाहि—धातुरेव कार्यभूतां क्रियां ब्रूते । तथाभूतार्थवाचिनस्तु धातोः परे लिङादयः केवलं कर्तृसंख्यामात्रवाचिनस्स्युः । लिङादिश्रवणे तु तथाभूतार्थतया धातुः प्रवृत्त इत्यवगमे सति कार्यभूतधात्वर्थावगमश्च संभवति । यथा लडादिभ्यो वर्तमानाद्यध्यवसायः । तेऽपि वर्तमानेऽर्थे वर्तमानाद्धातोर्विहिताः, न तु स्वयं कालवाचका इति ।

अत्रोच्यते—लिङादीनां कार्यपरत्वं तावदविवादम् । स्वर्गकामपदान्वयसामर्थ्यात्त्वपूर्वकार्यपराः । तथाहि—स्वर्गकामो यजेतेत्यादौ स्वर्गयागादिपदं न कर्तृमात्रपरं किं तु नियोज्यपरमिति षष्ठाध्यायस्याद्येऽधिकरणे निर्णीतम् । नियोज्यस्स उच्यते, यो ममेदं कार्यमिति स्वसंबन्धितया कार्यमवैति । न चान्यव्यापाराभिनिर्वर्त्यमन्यः स्वसंबन्धितया कार्यत्वेन वेदितुं क्षमते । तस्मान्ममेदं कार्यमिति प्रत्येता नियोज्यः । तदुक्तम्—

**नियोज्यस्य च कार्यं यस्स्वकीयत्वेन बुध्यते ।**

इति । बोद्धृतयाऽन्वयो नियोज्यान्वयः । स च लोकेऽपि व्युत्पन्नः । तथाहि—

पुष्टिकामः क्षीरं पिबेदित्यादौ पुष्टिकामः क्षीरपानं मया कार्यमिति बोद्धृतयाऽन्वेति । तथा ' देवदत्त पच ' इति संबोधनप्रयोगे देवदत्तः पाकं कर्यतया प्रत्येति । स्वर्गशब्दश्च सुखविशेषवाचकः । तत्साधने स्रक्चन्दनादौ प्रयोगात् । न च तत्र वस्तुस्वरूपनिबन्धनः प्रयोगः, सुखावगमे प्रयोगादर्शनात् सुखसाधनवचनता तदनभिधाने घटेत, उभयाभिधाने च गौरवम् । तदभिधानाभ्युपगमे च तत्साधनताया लक्षणैव । अर्थवादेषु च दुःखासंभिन्नचिरोपभोग्याभिलाषोपनेयप्रीतिश्रवणाच्च तत्परत्वम् । सा च प्रीतिः देहान्तरभोग्या कामनायोगाच्च तस्य साध्यत्वम् । न हि सिद्धे कामना । तेन साध्यस्वर्गविशिष्टो नियोज्यः तदेव कार्यं बोद्धुमलम् । यत्स्वकाम्यसाधनं तत्र क्रियैव कार्यतया बोधिता चेत् क्षणभङ्गुरायास्तस्याः कालान्तरे देहान्तरे भोग्यस्वर्गसाधनत्वायोगान्नियोज्यान्वयो विघटेत । तस्मादुक्तिर्ण लिङादिवाच्यम् । तदुक्तम्—

तस्मान्नियोज्यसंबन्धसमर्थं विधिवादिभिः ॥
कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते ॥

ननु ' दर्शपूर्णमासाभ्यां यजेत, ज्योतिष्टोमेन यजेत ' इति साधनत्वश्रुतिबलात्क्रियैव कालान्तरस्थायिनी स्यात् । यदि वा कर्मशक्तिः; किमपूर्वेण ? मैवम्—प्रतीतसिध्यर्थमविरुद्धं कल्पनीयम् । क्रियास्थायिता च प्रमाणान्तरविरुद्धा शक्तिमति कर्मणि च नष्टे शक्तेरवस्थानं विरुद्धम् । ननु तर्हि यागादिक्रिया देवताराधनभूता कार्यतया लिङादिभिरुच्यताम् । तयाऽऽराधिता सा देवता प्रसन्ना कालान्तरे कर्तारमेनं फलेन योजयति । स एनं प्रीतः प्रीणाति, स एवैनं भूतिं गमयतीत्याद्यर्थवादाश्च श्रूयन्ते । यजदेवपूजासङ्गतिकरणदानेष्विति पूजार्थे च यजिस्स्मर्यते । देवतोद्देशेन द्रव्यत्यागो याग इत्यभियुक्तोपदेशश्चेति । तदेतद्धर्ममीमांसका न सहन्ते, वदन्ति च प्रमाणविरोधम् । नानादेशवासिभिर्यजमानैः युगपत्प्रवृत्तकर्माराध्यत्वं विग्रहवत्या देवताया दुर्घटम्, विग्रहशून्यायाश्च सार्वज्ञं दुरुपपादम् । एतत्सर्वं देवताधिकरणे प्रपञ्चितम् । तर्हि यजमानपुरुषसंस्कारतया क्रिया कार्यतयोच्यताम् । संस्कृतश्च पुरुषः कालान्तरे फलभाग्भविष्यतीति, मैवम्—संस्कारत्वे प्रमाणाभावात्, न हि यागादयः पावमानिवत्पुरुषसंस्कारतया श्रूयन्ते । ननु क्रियैव कार्यतयोच्यताम् । तस्याश्च फलसाधनत्वश्रवणान्यथानुपपत्त्या तज्जन्यं कालान्तरस्थायिफलोदयानुगुणमात्माश्रयं किंचिदपरं कल्प्यताम्, मा भूत्तस्य लिङ्वाच्यतेति, मैवम्—न च फलानुगुणेनान्येन कल्पितेन क्रियायाः फलसाधनतोपपादिता स्यात् । साक्षाच्छ्रुतं फलसाधनत्वं च न

स्यात्, अन्यसाधनत्वात् । न हि साधनसाधनं स्यात् । न च कल्पितेन श्रुतसाधनत्वनिर्वाहः, कर्मणो नष्टत्वात् । तस्माल्लोके क्रियाकार्यपरतया व्युत्पन्नानां नियोज्यान्वयवशात्तदन्यकार्यपरत्वं युक्तम् । न केवलं वृद्धव्यवहारादेव व्युत्पत्तिः, प्रसिद्धपदसमभिव्याहारादपि लोके दृश्यते । वेदेऽपि 'यवमयश्चरुर्भवति, वाराही उपानहावुपमुञ्चते' इत्यत्र यववराहशब्दयोः प्रियङ्गौ दीर्घशूके वायसे सूकरे च प्रयुज्यमानयोरर्थवादसमभिव्याहारात् दीर्घशूके सूकरे च शक्तिनियमो दृष्टः । यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति, इति यवसन्निधावर्थवादः । तत्रेतरास्वोषधीषु पाकान्म्लानासु दीर्घशूकानामेव मोदमानत्वम् । तदुक्तमाचार्यैः—

> फाल्गुनेऽन्योषधीनां तु जायते पत्रशातनम् ।
> मोदमानास्तु दृश्यन्ते यवाः कणिकशालिनः ॥

इति । तथा 'वराहं गावोऽनुधावन्ति' इत्यर्थवादः वत्सबुद्ध्या गवां सूकरं प्रत्येवानुधावनं युक्तम् । न तु काकमिति ।

एकदेशिनस्त्वलौकिकेऽपि कार्ये व्युत्पत्तिमाहुः । तथा हि—लोके क्रियाकार्यताज्ञानात्प्रवृत्तावपि कार्यताज्ञानमेव प्रवृत्तिनिमित्तम् । न तु क्रियास्वरूपं, तस्यांशस्य प्रवृत्तावनुपयोगादिति निष्कृष्यालौकिककार्याभिधानं लोकत एव व्युत्पन्नमिति तदयुक्तम्—यद्यप्येवं कार्यमात्रपरत्वं वक्तुं शक्यम्, तथाऽपि तस्य कार्यत्वस्य लोके क्रियाश्रितस्यैव प्रवर्तकत्वदर्शनात्तदाश्रितमेव प्रतीयेत, न त्वलौकिकम् । यथा जातिमात्रस्य शब्दवाच्यत्वेऽपि तस्य व्यक्त्याश्रितत्वदर्शनात्तदाश्रितता न प्रतिक्षिप्यते। किं च मानान्तरावेद्ये कार्ये व्युत्पित्सुः कथं व्यवहारं जानीयात्? तदज्ञाने च कथं शब्दशक्तिग्रहः?, इति एवमुक्तेन न्यायेनापूर्वकार्याभिधायित्वे सिद्धे लोके क्रियाकार्यत्वं लाक्षणिकम् । उभयत्र शक्तिकल्पनायां गौरवात् । या ह्यनुष्ठीयमानाऽपूर्वसाधनम् । अतः क्रियाकार्यत्वं अपूर्वकार्यत्वसङ्गतमिति शक्यते तल्लक्षयितुम् । लौकिकानां तु प्रतिपत्तिप्रयोगौ मानान्तरागोचरेऽपूर्वे न संभवतः, तस्य लोकव्यवहारागोचरत्वात् । अतस्तेषां मुख्यार्थानवधारणान्म्लेच्छानां यववराहशब्दयोः प्रियङ्गुकाकयोरिव क्रियाकार्यत्व एव मुख्यत्वाभिमानो लक्षणाऽनभिमानश्च । मुख्यार्थकुशलानां तु मुख्यामुख्यविवेको भवति । ननु क्रियाकार्य एव मुख्यता अन्यत्र लक्षणा स्यादिति चेन्न, मानान्तरागोचरेण तेन संबन्धापरिज्ञानात्तत्र लक्षणानुपपत्तेः । किं च

यदि लिङादयः क्रियाकार्यपराः अप्रमाणकमेवापूर्वं स्यात् । अत एवोभयानुगतकार्यमात्रपरत्वमनुपपन्नम् । सामान्यस्य विशेषपर्यवसानावश्यंभावेन प्रसिद्ध एव पर्यवसानं न त्वप्रसिद्धे । ततश्चापूर्वप्रतीतिरेव न स्यात् । इत्थं कामाधिकारेऽपूर्वव्युत्पत्तेः नित्यनैमित्तिकनिषेधाधिकारेषु लिङादीनां तत्परत्वं सिद्धम् । मुख्यार्थलाभात् । नित्याधिकारानुगुण्येन क्रियाकार्यपरत्वाभिधानं कामाधिकारेऽनुपपन्नमिति सर्वत्रैकरूप्यमेव स्यात् । तस्मादपूर्वकार्याभिधायिनो लिङादय इति सिद्धम् ।

नन्विष्टसाधनताज्ञानात्प्रवृत्तिः, न कार्यताज्ञानात् । तदुक्तम्—

**प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥**

इति । प्रयोजनं फलम् । तस्यैव लिङादिवाच्यत्वम् । तदुक्तम्—

इति । ततश्च क्रियागतेष्टसाधनता भावनागतेष्टसाधनता वा लिङ्वाच्या । इष्टविशेषसमर्पकं च विध्युद्देशगतं स्वर्गादिपदम् । साधनत्वान्यथानुपपत्त्या चापूर्वं कल्प्यं, न तु वाच्यमिति । इदं परिहृतप्रायमपि परिहरामः—तृप्तिसाधनेऽतीते वर्तमाने च भोजनादौ प्रवृत्तेरदर्शनात् भविष्यत्स्वपि फलसाधनेषु सामुद्रिकशास्त्रविदाख्यानेषु शुभसूचकेषु लक्षणेष्वप्रवृत्तेः । तथा दैविकेषु भविष्यत्फलसाधनेषु वृष्ट्यातपादिष्वप्रवृत्तेर्नेष्टसाधनता प्रवृत्तिप्रयोजिका । अत्राह कश्चित्—इष्टसाधनतैव कार्यता, नापरा । सैव प्रवृत्तिहेतुरिति । तन्न । अतीतस्य वर्तमानस्य भोजनादेर्भविष्यतश्च वृष्ट्यादेरिष्टसाधनताऽस्ति । न च कार्यता । तेनान्या कार्यता, अन्या चेष्टसाधनता । किं तु क्लेशरूपस्य कर्मणः कार्यत्वं फलसाधनत्वाधीनं, न तु साक्षात् । यद्यप्येकवस्तुनिवेशिता द्वयोः, तथाऽपि भेदोऽस्त्येव । फलं प्रत्युपायत्वं फलसाधनत्वं, कृतिं प्रति प्रधानत्वं तदधीनसत्ताकत्वं च कार्यत्वं, न तु कृत्यधीनसिद्धिमात्रम् । तच्च कृतेः प्रधानं, यदधिकृत्य कृतिः प्रवर्तते । न च दुःखं तत्साधनं वाऽधिकृत्य कृतेः प्रवृत्तिः, किं तु सुखं सुखसाधनं वा । सुखसाधने कर्मणि कार्यत्वावगमः तत्साधनत्वनिबन्धनः, न तु स्वतः प्राधान्येन । अतो न तत्कृतिं प्रति प्रधानम् । सुखं हि सर्वः कार्यतयाऽवैति, न तु फलसाधनत्वमपेक्षते । तेन साधनतोत्तीर्णा कार्यता, न त्विष्टसाधनतैव । तच्च कार्यं लोके प्रत्यक्षानुमानवेद्यम् । कृतिर्हि मानसप्रत्यक्षवेद्या । तत्साध्यत्वमनुमानात्, विशिष्टप्रयोजनताऽपि प्रयत्नस्य प्रत्यक्षवैद्यैव स्वयमेव प्रवृत्तौ, वाक्यमूलप्रवृत्तावपि तादृशं कार्यज्ञानमेव प्रवृत्तिप्रयोजकम् न त्विष्टसाधनताज्ञानम् । क्रियावाचिभ्यो धातुभ्यः परे विहिता

लिङादयो लोके क्रियाकार्यमात्रपराः। वेदे तु प्रसिद्धनियोज्यसमभिव्याहारादपूर्वपराः। तेनान्या कार्यता अन्या साधनता इति स्थितम्। एतेनापूर्वस्यापि फलसाधनतयैव कार्यत्वं ब्रुवाणा निरस्ताः। फलवदपूर्वस्यापि साधनत्वमन्तरेण कार्यतोपपत्तेः। अत एव नित्यनैमित्तिकाधिकारेषु केवलं कार्यत्वमेव न तु साधनत्वम्।

ननु तर्हि इच्छा प्रवृत्तिहेतुः, जानाति इच्छति इति हि न्यायशास्त्रमर्यादा। सा लिङादिवाच्या स्यात्। मैवम्—इच्छा ह्युत्पन्ना प्रवृत्तिनिमित्तं, न तु ज्ञाता। स्यादेतत्—लोके लिङादीनां प्रेषणामन्त्रणाध्येषणेषु प्रयोगात् तेषां च प्रवृत्तिनिमित्तत्वात् तत्परत्वमेव स्यात्, न तु कार्यपरत्वम्, मैवम्—कार्यमेव हि तत्तत्प्रतिसंबन्धिभेदेन प्रैषादिव्यपदेशं लभते। तथा हि—प्रवर्त्यपुरुषापेक्षया ज्येष्ठेन पुंसा प्रतिपाद्यमानं कार्यं प्रैषः। तथा समेनामन्त्रणं, हीने चाध्येषणमिति। ननु कामाधिकारे नियोगस्य फलसाधनत्वाभ्युपगमात्। फलस्यैव लौकिकफलवत्कृत्युद्देश्यतया प्राधान्याभ्युपगमात्तस्यैव वाक्यार्थत्वं युक्तम्, मैवम्—न हि नियोज्यविशेषणतया प्रतिपन्नस्य तस्य प्राधान्यं, किं तु स्वतस्साध्यतया प्रतिपन्नस्य नियोगस्यैव। न ह्यस्मन्मते फलस्य भाव्यत्वं, किं स्वपूर्वस्यैव। फलं तु नियोज्यविशेषणम्। प्रकारान्तरेणान्वयासंभवात्। न हि तस्य भाव्यतयाऽन्वयः, अपूर्वस्यैव भाव्यस्य स्वतो लब्धत्वात्। तस्मान्नियोगस्य कार्यतानिर्वाहार्थमेव स्वविषयानुष्ठानप्रवृत्तये स्वनियोज्यस्य फलं साधयति स्वामिवत्। यथा स्वामी स्वसंविधानार्थमेव गर्भदासस्योपकरोति, तथा नियोगोऽपीति न प्राधान्यपदच्युतिः। तदुक्तम्—

आत्मसिद्धानुकूलस्य नियोज्यस्य प्रसिद्धये।
कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः॥

इति। एवं चापूर्वफलयोः प्रधानोपसर्जनभावाद्द्वयोरपि साध्यत्वेनैकत्वाध्यवसायाच्च न साध्यद्वयम्। अत एव न वाक्यभेदश्च। ननु फलस्य कथं प्रकारान्तरेणान्वयासंभवः। उच्यते—तथाहि—प्रथममपूर्वमेव ममेदं कार्यमिति बोध्यतया नियोज्यत्वे नान्वेति। स्वर्गकामः पुरुषः स पश्चात्तत्सिद्धये तत्साधने कर्मणि मयाऽनुष्ठेयमिदं कर्मेत्यधिकारितया। कर्मणि सामर्थ्यज्ञानमधिकारः। ऐश्वर्यमिति यावत्। तदनुतिष्ठन् कर्तृतयेत्येकस्यैव तिस्रोऽवस्थाः क्रमभाविन्यः। तत्र नियोज्यत्वं नियोगे। इतरदवस्थाद्वयं कर्मणि। न चाविशिष्टो नियोज्यः। अत एवाश्रुतनियोज्य काङ्क्षावशा-

नियोज्याध्याहारे तद्विशेषणतया फलपरिकल्पनम् । तथाहि 'विश्वजिता यजेत' इत्यत्र लिङाऽपूर्वं कार्यतया प्रतीयते । तस्य च कार्यत्वं स्वतोऽनुष्ठातुमशक्यतया विषयानुष्ठानमन्तरेण न सम्भवतीति तदनुष्ठाता कर्ताऽऽक्षिप्यते । कर्तृत्वं चाधिकारमन्तरेण न सम्भवति । यो हि मदीयमिदं कर्मेति जानाति, स एव तदनुतिष्ठति । स चाधिकारो न नियोज्यत्वमन्तरेण । यो हि नियोगं ममेदं कार्यमिति जानाति, स एतत्साधनं कर्म मदीयकार्यसाधनतया मदर्थमित्यध्यवस्यति । न च सा विशिष्टा भवितुमर्हतीति तद्विशेषणतया पशुपुत्रान्नाद्यादिनानासुखसाधनेषु अनुवृत्तसुखसामान्यलक्षणः सर्वापेक्षितस्स्वर्गः परिकल्प्यते । यद्यपि श्रुतनियोज्यस्थलेऽपि नियोगस्य नियोज्याकाङ्क्षा कर्त्रधिकारप्रणालिकयैव । तथाऽपि तत्र नियोज्यस्य साक्षाच्छ्रुतत्वात्प्रथमं तेनान्वयः । तदपि तत्सिद्धयेऽधिकारिकर्तृभ्यामिति आकाङ्क्षाक्रममनादृत्यैवान्वयः । अश्रुतस्थले तु त्रयाणामप्यश्रुतत्वाविशेषादाकाङ्क्षाक्रमेणैव कर्त्रधिकारिनियोज्यान्वय इति स्थितिः । यतो नियोज्यान्वयः कर्त्रादिप्रणालिकया, अतो यत्रान्यतोऽनुष्ठानलाभः तत्र न नियोज्यकल्पनं, यथाऽध्ययनविधौ । न ह्यध्यापनविधिप्रयुक्तस्वविषयानुष्ठानो न नियोज्यमपेक्षते । अध्यापनविधिश्चाध्ययनमन्तरेणाध्यापनासम्भवात् अध्ययनमपि प्रयुङ्क्ते । यथा वा उत्तरक्रतुविधिप्रयोज्यमाधानम्, यथा वा प्रयाजादिविधयः । ते हि प्रधानविध्यनुष्ठापितस्वविषया न पृथगधिकारिणं नियोज्यं कल्पयन्तीति । ननु विश्वजिदादिवन्नित्यनैमित्तिकनिषेधाधिकारेष्वपि फलं किमिति न कल्प्यते ? किं च कामाधिकारे नियोज्यस्य स्वविषयानुष्ठानसिद्ध्यर्थं नियोगः फलं तस्य साधयतीत्युक्तमिति तन्न्यायेनात्रापि फलं स्यात् । नाम्, न हि कामाधिकारे नियोगस्य फलसाधनत्वात्प्रवर्तकत्वम् । किं तु कार्यत्वादेव । फलं तु श्रुतत्वादनुमन्यते । लोके फलसाधनत्वमपि कार्यतयाऽवगमार्थमेवोपयुज्यते, न तु प्रवृत्तये । सा तु कार्यतावगमादेव । साक्षात्फलस्यापि कार्यतयाऽवगम्यमानस्यैव प्रवृत्तिहेतुत्वम् । नित्येषु च निरपेक्षाच्छब्दादपूर्वं कार्यतया प्रतीयते । नियोज्यश्च स्ववाक्येष्वेव लब्धः । 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादौ जीवनवान्, 'पुत्रे जाते यदष्टाकपालः' इत्यादौ पुत्रजननवान्, 'न कलञ्जं भक्षयेत्' इत्यादौ निषेध्यानुष्ठाने प्रवृत्तः । जीवनादिकं च नियोज्यविशेषणं, अविशिष्टस्य नियोज्यस्यासम्भवात् । अतस्तत्र निरपेक्षं कार्यमेव स्ववाक्यश्रुतं नियोज्यं स्वविषयानुष्ठानाय प्रयुङ्क्ते । विश्वजिदादौ तु नियोज्यस्याश्रवणाद्विशिष्टस्य तस्य परिकल्पनमिति ।

ननु नित्यनैमित्तिकाधिकारेषु परैः प्रत्यवायपरिहारस्य भाव्यतयाऽन्ययोऽन्य-

नुपपन्नः । ननु शब्दात्प्रतीताऽपि कार्यता निष्फलत्वादनुमानेन बाध्यतां, 'विमतमकार्यं फलासाधनत्वात्' इति । न, आगमविरोधेऽनुमानानुदयात् । लिङादिप्रत्ययश्च कार्यतयाऽपूर्वं बोधयतीत्युक्तम् । तर्हि कार्यतावगतावपि निष्फलत्वात्तत्र न प्रवर्तेत इति चेत्, कामाधिकारे फलसाधनतावगतावपि तत्र कश्चिन्न प्रवर्तते । किं कर्तव्यम् ? एतावानेव प्रमाणव्यापारः, यत्स्वार्थप्रदर्शनमात्रम् । ननु कामाधिकारेऽनुष्ठानाभावे फलं न सिध्येत् । तच्चानिष्टम् । नित्येषु तु किं स्यात् ? विधिसिद्धिर्न स्यात् । ततः किमनिष्टम् ? तदेवानिष्टम्, तस्यैव पुरुषार्थत्वात् । अत एव कामाधिकारेऽपि विधिसिद्धिः प्रयोजनम् । फलसिद्धिस्तु नान्तरीयका ।

ननु कथं तदसिद्धिरनिष्टम् ? तत्सिद्धौ स्तुवन्तस्तदसिद्धौ गर्हमाणाः शिष्टा एवात्रोत्तरप्रदातारः । तदसिद्धावकृतार्थं मन्यमानं स्वकीयमन्तःकरणं वा । तस्मात्कार्यमेव प्रधानम् । तदेव वाक्यार्थः । लिङादयस्साक्षात्तत्पराः । इतराण्यपि तत्तत्प्रकरणपठितानि वाक्यानि तत्तत्कार्यान्वितस्वार्थपराणि, सर्वपदानां कार्यान्विते व्युत्पत्तेः । तथा हि—तत्तत्प्रकरणपठितानां पदानां नानाप्रकारेणान्वयः, केषांचित्करणतया केषांचिन्नियोज्यतया केषांचिदितिकर्तव्यतया केषांचिन्नामधेयतया केषांचिदनुष्ठेयावस्थपदार्थस्मारकतया केषांचित्स्तावकतया प्रगीतानां स्तोत्रमन्त्राणां षुगुणिनिकारो गुणप्रकाशकतया अप्रगीतानां शस्त्रमन्त्राणामपि तथाऽन्वयः । प्रैषमन्त्राणां तु परप्रत्यायकतयेति यथायोगमन्वयो द्रष्टव्यः । अतः कृत्स्नो वेदः कार्यपरतयैव प्रमाणम् । इदमेव कार्यं मानान्तरागोचरत्वादपूर्वमिति स्वात्मनि पुरुषं नियुञ्जानो नियोग इति गीयते । तदेव स्वप्रकरणपठितपदार्थजातं स्वशेषतया गृह्णन् ग्राहक इति गृहीतं पदार्थवर्गं श्रुत्यादिभिर्वा स्वातन्त्र्येण वा द्वारशेषतया विनियुञ्जानो विनियोजक इति, तत्र श्रुत्यादिविनियोगचिन्ता तृतीये, चतुर्थे तदेव स्वशेषतया गृहीतं, पश्चात् द्वारशेषतया च विनियुक्तमितिकर्तव्यताकलापं कदाचित्करणं चानुष्ठापयन् प्रयोजक इति च ग्राहकत्वविनियोजकत्वप्रयोजकत्वावस्थाः क्रमभाविन्यः । तास्त्वधिकारापूर्वस्यैव, न स्वङ्गप्रधानोत्पत्त्यपूर्वाणाम् । क्वचित्प्रयुक्तिशक्तस्याप्यप्रयोजकत्वं यथा—काम्यज्योतिष्टोमापूर्वप्रयुक्त्या स्वविषयानुष्ठानसिद्धौ प्रासङ्गिकस्य नित्यज्योतिष्टोमापूर्वस्य । तच्च प्रयोजकत्वं व्यवस्थयैव । नित्यनैमित्तिकाधिकारापूर्वस्य करणांशे इतिकर्तव्यतांशे च । कामाधिकारापूर्वस्य त्वितिकर्तव्यतांशे । करणांशे तु फलरागादेव प्रवृत्तेर्न तत्र प्रयोजकत्वं, अप्रवृत्तप्रवर्तनस्वभावत्वाद्विधेः । अत एव 'श्येनेनाभिचरन् यजेत'

इत्यत्र अभिचारापरपर्यायमरणसाधनहिंसारूपस्य श्येनयागस्य करणस्य रागमूलप्रवृत्तिविषयस्य विध्यनुष्ठाप्यत्वाभावेन 'न हिंस्यात्' इति प्रतिषेधगोचरस्यानर्थत्वम्। अग्नीषोमीयादिहिंसायास्तु यागाङ्गत्वेन विध्यनुष्ठाप्यत्वान्न तत्र निषेधशास्त्रप्रवृत्तिरिति ततो वैषम्यम्। परमते त्वभिचारापरपर्यायस्य हिंसात्मकस्य मरणरूपस्य फलस्यैव निषेधशास्त्रगोचरत्वादनर्थत्वम्। न तु करणस्य, तस्य विधेयत्वात्। न हि विधिसृष्टा प्रवृत्तिरनर्थाय कल्पते। क्वचिदवान्तरापूर्वस्यापि परमापूर्वाधीनं प्रयोजकत्वम्। यथा 'मन्द्रं दीक्षणीयायामनुब्रूयात्' इत्यत्र ज्योतिष्टोमाङ्गस्य दीक्षणीयाद्यपूर्वस्य वाङ्‌नियमं प्रति। यद्यपि सर्वत्र परमापूर्वमेव प्रयोजकम्, स्वतः कार्यत्वात्। तथापि दीक्षणीयां प्रति वाङ्‌नियमस्य शेषतया विनियोगबलादवान्तरापूर्वद्वारैव परमापूर्वस्य प्रयोजकत्वमिति तस्यापि प्रयोजकत्वव्यपदेशः। आग्नेयादिकरणोत्पत्त्यपूर्वाणां तु परमापूर्वं प्रति करणतयैवान्वयात् तस्यैव साक्षात्प्रयोजकत्वे सम्भवति द्वारद्वारितया प्रयोजकत्वकल्पनाया अयुक्तत्वान्न स्वाङ्गं प्रति परमापूर्वायत्तमपि प्रयोजकत्वम्। 'व्रीहीनवहन्ति' 'तण्डुलान्पिनष्टि' इति विहितयोर्हन्तिपिनष्ट्योस्तु 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति, 'प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि, इति विहितं स्वाङ्गभूतं प्रोक्षणं प्रति तयोर्लौकिकतया निर्ज्ञातोपायसाध्यत्वान्न परमापूर्वायत्तमपि प्रयोजकत्वम्। दीक्षणीयापूर्वस्य त्वलौकिकतया न निर्ज्ञातोपायसाध्यत्वमिति वाङ्‌नियमप्रयोजकत्वम्।

इत्थं नियोज्यान्वयवशाल्लिङादीनामपूर्वपरत्वमभिहितम्। स चान्वयः प्रयोजकापूर्वस्यैव, कृत्युद्देश्यतया प्रतीतेः। अध्ययनाङ्गप्रधानोत्पत्त्यपूर्वाणां तच्छून्यानामेवाभिधानम्। तथा हि—अध्ययनविधेरध्यापनविधिप्रयुक्त्यैवानुष्ठानलाभान्नियोज्यशून्याभिधानम्। अङ्गोत्पत्तिनियोगा अपि ग्राहकगृहीतप्रयाजादिविषयत्वादधिकारनियोगत एव लब्धस्वविषयानुष्ठानास्सिध्यन्तीति न तेषु नियोज्यान्विताभिधानम्। तथा प्रधानोत्पत्तिनियोगा अप्यधिकारनियोगाक्षिप्तविषयानुष्ठानेनैवाप्तसिद्धय इति न तत्र नियोज्यापेक्षा। यथा ह्यपूर्वप्रतीतौ नियोज्यः प्रतीत्यनुबन्धी, एवं विषयोऽपि। न ह्यविषयकमपूर्वं प्रत्येतुं शक्यम्। किं तु नियोज्यान्वयः प्रायिकः। विषयान्वयस्तु नियत एव। अधिकारापूर्वप्रधानाङ्गोत्पत्त्यपूर्वाणां विषयनियतत्वात्। 'यजेत' 'जुहुयात्' 'दद्यात्' इत्यादिषु सर्वाण्यपि कार्याणि यागकार्यं होमकार्यं दानकार्यमिति यागादिभावार्थावच्छिन्नमेव प्रतीयते। अतः प्रकृत्यर्थभूतो भावार्थ एव विषयत्वेनान्वेति।

ननु 'यजेत' इत्यादौ लिङादिप्रत्ययेन केवलं कृतिस्तत्साध्यमपूर्वं च परस्परान्वितं युगपदभिधीयते। प्रकृत्या तु केवलं भावार्थः। तस्य कथमुभयावच्छेदकत्वम्? आकाङ्क्षादिपरामर्शेनेति ब्रूमः। तथा हि—कृतिसाध्यं कार्यम्। तच्च कृतेरीप्सिततमम्। कृतिश्च प्रयत्नरूपो व्यापारः। स च प्रत्यात्मं मानसप्रत्यक्षवेद्यः। स च भवितर्यपूर्वे प्रयोजकस्य भावयितुरात्मनो व्यापारत्वाद्भावनेत्युच्यते। तदुक्तम्—

"भवत्यर्थस्य कर्तुः प्रयोजकव्यापारो भावना"

इति। तस्य च तथाविधस्य नूनं केन चिद्द्रव्येन वस्तुनाऽवच्छेदो वक्तव्यः। न ह्यनवच्छिन्नः प्रयत्नस्सम्भवति। अपूर्वस्य च नावच्छेदकत्वम्। तस्य साक्षात्तन्निर्वर्त्यत्वाभावात्। अतस्तत्साध्यभूतः प्रकृत्यर्थो भावार्थ एव कृतिमवच्छिन्दन् कार्यमप्यवच्छिनत्ति। कृत्यवच्छेदद्वारा कार्यावच्छेदकत्वं विषयत्वमिति विषयविदः। विषिणोत्यवच्छिनत्तीत्यवच्छेदकपर्यायो विषयशब्दः। अनन्यत्रभावो वा विषयशब्दार्थः। कृत्यपूर्वयोर्मध्य एव भवति नान्यत्रेति। 'यदाग्नेयमष्टाकपालं सौम्यं चरुं सावित्रं द्वादशकपालं भवति' इत्यादौ भावार्थस्यापि द्रव्यदेवतासम्बन्धस्य शब्दबलाद्विषयत्वमिति विवरणकारः। इत्थं विषयावच्छिन्नेऽपूर्वे प्रतिपन्ने पश्चात्तस्य करणेतिकर्तव्यताकाङ्क्षायां पूर्वं विषयीभूतो भावार्थ एवापूर्वभावनायां करणम्। कार्यस्य हि करणाकाङ्क्षा स्वारसिकी। अन्यार्थप्रवृत्तव्यापारव्याप्यं करणमिति करणलक्षणम्। अत्राप्यपूर्वार्थप्रवृत्तकृतिव्याप्यत्वाद्धात्वर्थः करणं, परशुवत्। यथा द्वैधीभावप्रवृत्ताभ्यामुद्यमननिपतनाभ्यां व्याप्यमानः परशुः द्वैधीभावलक्षणफलावच्छेदलब्धद्वैधीकरणव्यपदेशयोश्छिदिधातुवाच्ययोस्तयोरेवोद्यमननिपतनयोः करणम्। ननु प्रयत्नव्याप्यो धात्वर्थः तं प्रति कर्मैव स्यात्, न तु करणम्। उच्यते—न तावत्कर्मत्वमनीप्सितत्वात्। कृतिरीप्सितं तत्पूर्वमेव। कर्तृव्यतिरिक्तानि सर्वाण्यपि कारकाणि कर्तृव्यापारव्याप्यानि। नैतावता कर्मता। तथापि यदीप्सितं तदेव कर्म, अन्यत्तु करणादिकम्। अत्रापि प्रयत्नमात्रापेक्षया छिद्भावार्थः कर्मैव, तन्निर्वर्त्यत्वात्। अन्यार्थप्रवृत्तप्रयत्नापेक्षया तु करणमेव, परशुवत्। यथा परशुरुद्यमननिपतनापेक्षया कर्मैव, परशुमुद्यच्छति नियच्छतीति। अन्यार्थप्रवृत्ततदपेक्षया तु करणम्। अतः कृतिव्याप्यस्यापि करणता नानुपपन्ना। धात्वर्थस्य करणत्वादेव 'उद्भिदा यजेत, ज्योतिष्टोमेन यजेत' इत्यादौ तृतीयानिर्देशः। उद्भिदादिशब्दानां कर्मनामधेयत्वात्, तस्य च करणत्वात्। 'अग्निहोत्रं जुहोति, समिधो यजति' इत्यादौ द्वितीया त्वनीप्सितकर्मत्वात्,

तत्रापि द्वितीया दृश्यते, ग्रामं गच्छन्वृक्षमूलान्युपसर्पतीति । एवं प्रतीत्यसम्बन्धितया विषयीभूतस्य भावार्थस्य पश्चात्सिद्ध्यनुबन्धितया करणत्वं नानुपपन्नम्। किं तु काम्येषु प्रथमं फलं प्रति करणीभूतस्यापूर्वं प्रति पश्चाद्विषयत्वं, तदनु करणत्वम्। नित्ये तु विषयीभूतस्य करणत्वम्। अत एव काम्ये सकलाङ्गोपसंहारेण करणानुष्ठानम्। नित्ये तु शक्याङ्गोपसंहारेण। तत्र प्रथमत एव पूर्वप्रतीतस्य शक्याङ्गोपसंहारेण कतिपयाङ्गस्यागेऽपि पूर्वप्रतीतविषयविलयाभावेनापूर्वसिद्धिसम्भवान्न सकलाङ्गोपसंहारनियमः।

अत्र भावनावाक्यार्थवादिनः—कथं प्रकृत्यर्थो धात्वर्थः प्रत्ययार्थप्रधानमपूर्वमतिलङ्घ्य विप्रकृष्टेन फलेन प्रथमं करणतयाऽन्वेतीति परिहसन्ति, ते प्रष्टव्याः। त्वन्मते वा कथं भावना सन्निहितं साक्षाद्धात्वर्थं प्रकृत्यर्थं परित्यज्य विप्रकृष्टं फलमवलम्बते। आकाङ्क्षावशादिति चेत्, अत्रापि समानम्। एवं चापूर्वफलयोरेकैव भावना, एकत्वात्पुरुषप्रयत्नस्य। सैव कृतिः पश्चात्करणगोचरा तदनुगोचरा। इयं च साध्यविवृद्धिरिति प्राभाकराः। सर्वस्यापूर्वगोचरकृतिसाध्यत्वात्। करणत्वं चापूर्वभावनां फलभावनां प्रत्येव, न त्वपूर्वं फलं वा प्रति, सर्वस्यापि करणस्य व्यापारयोगितानियमात्। अधिकारापूर्वफलयोश्च व्यापाररूपत्वाद्भावनायाश्च तद्रूपत्वात्। परशुरपि द्वैधीकरणरूपे व्यापार एव करणम्। न तु द्वैधीभावे, तस्य व्यापारफलत्वात्। ननु विषयीभूतस्य करणत्वे 'दर्शपूर्णमासाभ्यां यजेत' इत्येकेनैव यजिना तन्त्रेणोपात्तानां षण्णां यागानामेकं विषयत्वमिति करणत्वमप्येकमेव स्यात्। ततश्च भेदेनेतिकर्तव्यतान्वयो न स्यात्। तथा चाज्यौषधसान्नाय्यधर्माणां विलापनोत्पवनावहननप्रोक्षणदोहनातञ्चनादीनां सांकर्येणान्वयः स्यात्। नैवम्—प्रतीत्यनुबन्धि विषयत्वम्। तच्च यथाभिधानमेव स्यात्। प्रतीत्युपायत्वादभिधानस्य। तन्त्राभिधानाच्च सहितानां विषयत्वम्। करणत्वं तु सिद्ध्यनुबन्धि। तच्च यथास्वभावमेव स्यात्। स्वभावाधीना साधनानां साधनता। उत्पत्तिवाक्येषु च षडपि यागा द्रव्यदेवताभेदाद्भिन्नस्वभावाः प्रतिपन्ना इति भेदेनैव करणत्वम्। अतष्षड्भिरपि यागैस्स्वावान्तरव्यापारैरेकमेवापूर्वं जन्यते। करणभेदाच्च धर्मव्यवस्था। तेनाधिकारापूर्वप्रयुक्तत्वेऽपि स्वावान्तरापूर्वाणां करणानां भिन्नत्वादाज्यौषधसान्नाय्यधर्माणां यथाद्वारमसांकर्येणानुष्ठानं, एकस्याप्यनेककरणसाध्यत्वं दृष्टम्। यथा—देवदत्तोऽश्वेन दीपिकया रथेन यातीति। तत्रावान्तरव्यापारो भिन्नः। अत्राप्यवान्तरापूर्वाणि भिन्नानि। तथा 'राजसूयेन यजेत' इत्यत्रापि विषयैक्येऽपि करणभेदः। इष्टिपशुसोमसङ्घातात्मको राजसूयः।

तस्माद्विषयीभूतस्य करणत्वं सुस्थम् । एतत्सर्वं विषयीकरणीयन्नाम्नि प्रकरणे प्रपञ्चितम् ।

अत्रेत्थं गुरुमते शास्त्रार्थान्वयप्रकारसंक्षेपः । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्याम्नाय तत्सन्निधौ दर्शपूर्णमासलक्षणकालयोग्याग्नेयादिषट्कमाम्नातम् तथाआरादुपकारिपदार्थवर्गश्चाम्नातः । तत्र दर्शपूर्णमासवाक्यमेव विध्युद्देशवाक्यं, तत्रैव विषयनियोज्यान्वितापूर्वप्रतीतेः । तदेव कृत्युद्देश्यतया प्रधानमधिकारापूर्वं च । इतरेष्वपि वाक्येषु प्रथमं साधिकारविधेरेव सन्निहितत्वेन प्रत्यभिज्ञायमानत्वात् तदेवापूर्वं तत्तद्विधिप्रत्ययेनानूद्यते । प्रकृत्यर्थस्येव प्रत्ययार्थस्यापि पूर्वप्रतिपन्नत्वादनुवादो घटत एव । तत्राग्नेयादि षट्कस्योत्पत्तावेव कालयोगाद्दर्शपूर्णमासशब्दवाच्यत्वम्, द्विवचने च त्रिकद्वयापन्नस्य तस्यैवोपादानम् । यजेतेति यजिना च तदेव तन्त्रेणोपात्तम् । इत्थं विषयनियोज्यसङ्घटिते स्वयम्प्रयोजनभूतेऽपूर्वे प्रतिपन्ने सति तत्सन्निधिपठितस्यारात्सन्निपातिपदार्थवर्गस्य स्वयमप्रयोजनतया प्रयोजनाकाङ्क्षायां प्रयोजनीभूतेनाधिकारापूर्वेणान्वययोग्यत्वे सत्यधिकारवाक्यगतो लिङ्प्रत्ययो युगपत्कृत्स्नपदार्थान्वितं स्वार्थमभिधत्ते । स चान्वयः पदार्थवर्गं प्रति ग्राहकैदमर्थ्यरूपः । प्रयोजनप्रयोजनिभावेनान्वयश्च लोके व्युत्पत्तिसिद्धः । इदमेव ग्राहकग्रहणमित्युच्यते । किं तु तत्र सन्निपातिवाक्येषु विधिप्रत्ययेनाधिकारापूर्वेऽनूदिते सत्यवहननप्रोक्षणादयश्च तदन्वितं स्वार्थमभिदधतीत्यन्योन्यान्विताभिधानम् । आरादुपकारकवाक्येषु न तदन्वितस्वार्थाभिधानम् । तथा हि—साधिकारविधिसन्निधौ प्रयाजादिवाक्यानि श्रुतानि । तानि न तावत्स्वस्वविषयं नियोगान्तरमभिधातुमीशते, अवघातादिवदनुवादशङ्काकुण्ठितत्वात् । किं तु तत्तद्द्रव्यदेवताविशिष्टं यागस्वरूपमेवोपपादयन्ति । तथा चाधिकारवाक्यगतो लिङ्शब्दः तदन्वितं स्वार्थमभिधत्ते । प्रयाजादीनां च क्षणिकतया सम्भूयोपकारत्वसिद्धयेऽवान्तरापूर्वाण्याश्रियन्ते । तत्र योऽसौ लिङादिः प्रागनूद्यमानार्थतया शङ्कितः स इदानीं परमापूर्वाङ्गतयैव नियोगान्तरमभिधत्ते, न स्वातन्त्र्येण, अन्यथा विषयनियोगविरोधात् । अभिहिते च तस्मिन्प्रयाजादिवाक्यानि तदन्वितस्वार्थबोधकानि, न तु परमापूर्वान्वितस्वार्थबोधकानि, कार्यद्वयसम्बन्धानुपपत्तेः । न ह्येकं वस्तु युगपत्कार्यद्वयसम्बन्धि शक्यमवगन्तुम् । तथाव्युत्पत्तिविरहात् । अतो नान्योन्यान्विताभिधानम् । यद्यवघातादिवत्तेषामपि परमापूर्वान्वितस्वार्थाभिधानं स्यात् । तथा चोत्पत्तावेवास्य तिरश्चीनतया पुनर्नियो-

गान्तरविषयता न स्यात् । अवान्तरापूर्वप्रतीतिस्तु दूरे । तेन ग्राहकग्रहणाविशेषेऽपि सन्निपातिवाक्येषु अन्योन्याभिधानं, आरादुपकारिवाक्येषु नेति विशेषः । इदं च ग्राहकग्रहणं खले कपोतवदन्योन्यान्वितैः कृत्स्नपदार्थैः प्रत्ययार्थैश्च सह युगपदेव भवति । इत्थं सकलपदार्थशेषिणि प्रयोजनभूते ग्राहके प्रतीते तस्य स्वतस्साध्यतया करणाकाङ्क्षायां विषयीभूतानां आग्नेयादीनामेव करणतयाऽन्वयः । तेषामपि सम्भूय-कारित्वसिद्ध्यर्थं प्रधानोत्पत्त्यपूर्वाणि प्रति करणत्वमङ्गीक्रियते । प्रागनूद्यमानार्थतया शङ्किता लिङादयस्तु पश्चात्तद्वाचकाः । इत्थं करणान्वितो नियोग इतिकर्तव्यतामाका-ङ्क्षमाणः स्वयमेवोभयविधमपि पदार्थवर्गं स्वकरणशेषतया विनियुङ्क्ते । इदमेव करणैदमर्थ्यम् । अनेन ग्राहकैदमर्थ्यनिर्वाहश्च भवति । तदनु करणैदमर्थ्यनिर्वाहाय करणोपकारमाकाङ्क्षमाणो नियोगः प्रथमं करणशरीरनिर्वर्तकं सन्निपातिपदार्थवर्गं श्रुत्यादिसहितस्तत्तद्द्वारशेषतया विनियुङ्क्ते । विनियुञ्जानोऽपि तत्तत्प्रधानापूर्वभेदनि-बन्धनतत्तत्करणभेदमाश्रित्य तत्तत्करणशेषतया व्यवस्थयैव । अनेन सन्निपातिनां करणैदमर्थ्यनिर्वाहश्च भवति । तत्तत्कारकगतातिशयाधानद्वारेण करणशरीर-निर्वर्तकत्वमेव सन्निपातित्वम् । तत्तत्कारकगतातिशय एवान्तरकिञ्चित्कारः । तथा प्रकरणमात्रसहायः प्रयाजादीन् साक्षात्करणतया विनियुङ्क्ते, द्वारसंयोगाभावात् । विनियुञ्जानोऽपि विशेषानवगमात्कृत्स्नकरणशेषतया । अत एव तेषां समुच्चयेनान्वयः, तन्त्रानुष्ठानं च । अवान्तरापूर्वाण्येवात्र करणोपकारः । स एव तज्जन्यः किञ्चित्कारः । अनेन करणैदमर्थ्यनिर्वाहो ग्राहकैदमर्थ्यनिर्वाहश्च भवति । अवान्तरापूर्वकरणोपकार-कत्वमेवारादुपकारकत्वम् ।

ननु प्रयाजादीनां किमिति समुच्चयेनान्वयः ? विकल्पेनान्वयस्तु किमिति न स्यात् ? न स्यात् । ऐकार्थ्यनैरपेक्ष्ययोरभावात् । तथा हि—ते खलु व्रीहियव-योर्विकल्पप्रयोजके । उभयोरपि पुरोडाशनिर्वर्तकत्वेनैकार्थ्यात् अन्यतरेणापि कार्य-सिद्धिरितरनैरपेक्ष्याच्च । अत्र तु प्रयाजादीनां स्वस्वोपकारेषु नैरपेक्ष्यसम्भवेऽपि नैकार्थ्यं; अखण्डोपकारे परस्परसापेक्षत्वात् । अत्र स्वैकार्थ्यसम्भवेऽपि तत्र सर्वाङ्गनि-ष्पाद्यत्वान्न नैरपेक्ष्यमिति न विकल्पः ।

किं चाष्टदोषदुष्टश्च सः । तथा हि—व्रीहिशास्त्रानुष्ठानकाले यवशास्त्रस्य प्रामाण्यपरित्यागः, अप्रामाण्यस्वीकारश्चेति दोषद्वयम् । तस्यैव यवशास्त्रस्य यवानु-ष्ठानकाले त्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यत्यागश्चेति दोषद्वयम् । इति यव-

शास्त्रस्य चत्वारो दोषाः ! एवं व्रीहिशास्त्रस्यापि यवशास्त्रानुष्ठानकाले दोषद्वयम्, व्रीह्यनुष्ठानकाले च दोषद्वयमित्येकैकत्र कोटौ चत्वारो दोषः। प्रयाजादीनां तु न करणतयाऽन्वयः, आग्नेयादिकरणान्तरावरोधात्। अखण्डोपकारस्तु तयविध ङ्गनिष्पाद्यः। परमते तु कृत्स्नस्यापि पदार्थवर्गस्य साक्षात्परंपरया च द्वाऽन्वयपूर्वकः प्रधानान्वयः। अत्र तु प्रधानान्वयपूर्वक इति वैषम्यम्। तत्तद्द्वाराणामपूर्वीयत्वलक्षणा तु मतद्वयसाधारणीति। तत्राग्नेयाग्नीषोमीययोरुत्पत्तिशिष्टपुरोडाशावरोधाद्व्रीहीणां न साक्षात्करणत्वम्, किं तु तत्प्रकृतित्वमेव। इत्थं व्रीहीणां तत्प्रकृतितयाऽन्वये सति निरूढं प्रत्यनिरूढस्य शेषतेति न्यायादवहननादीनां द्वारद्वारिभावेनान्वयः। तथा सान्नाय्यधर्माणामाज्यधर्माणां च तत्तत्कारकशेषतयाऽन्वयोऽवगन्तव्यः। इत्थं यथाविनियोगं सकलपदार्थान्वितं ग्राहकत्वविनियोजकत्वावस्थमधिकारापूर्वं शास्त्रप्रमेयं विधितत्त्वमिति सिद्धम्॥

इति श्रीमद्रामानुजाचार्यविरचिते तन्त्ररहस्ये

शास्त्रप्रमेयपरिच्छेदश्चतुर्थः ॥



श्री.

# अथ पञ्चमः परिच्छेदः ॥

रामानुजार्यरचिते निगमान्तभाष्ये
जीवेश्वरप्रकृतिभेदपरे विनीतः ॥
श्रीवेङ्कटाद्रिगुरुणा करुणावशेन
रामानुजो व्यधित तन्त्ररहस्यशिक्षाम् ॥

इत्थमसन्निकृष्टार्थविषयं शास्त्रम्। तत्प्रतिपाद्यं च सपरिकरं विध्याख्यं धर्मतत्वमित्युक्तम्। तच्च शास्त्रादौ प्रतिज्ञातम्। वेदैकसमधिगम्यत्वं च तत्र द्वितीयसूत्रे। स च मीमांसापेक्ष एव प्रत्यायकः। वेदवाक्यार्थसंशये सति तन्निर्णयौपयिकन्यायनिबन्धनं शास्त्रं मीमांसा। सम्प्रति तदारम्भो विचार्यते। तत्र परपूर्वपक्षसङ्क्षेपः—किं मीमांसा आरम्भणीया, उत नेति प्रथमविचारः। तदर्थं स्वाध्यायो विवक्षितार्थः, उत नेति। तदर्थमपि किं स्वाध्यायोऽध्येतव्य इत्यत्रार्थज्ञानं भाव्यमुत स्वर्गादिफलमिति। अत्र पूर्वः पक्षः—अत्र तव्यप्रत्ययेन परप्रेरणात्मकविध्यवरुद्धा भावना तावत्प्रतीयते, सा चाकाङ्क्षात्रयवती स्वभावतः। तत्र न तावत्समानपदोपात्तं गुरुमुखोच्चारितानूच्चारणात्मकमध्ययनं भाव्यतया संबन्धुमर्हति, अपुरुषार्थत्वात्तत्र पुरुषप्रवृत्त्यनुपपत्तेः। विध्यवरोधवशाद्भावना पुरुषार्थपरेत्युक्तम्। अत एव नाप्येकवाक्यतया समभिव्याहृतोऽक्षरराशिलक्षणस्स्वाध्यायः। विध्यानर्थक्यमपि। अन्तरेणापि विधिमध्ययनेन स्वाध्यायो गृह्यत इत्यन्वयव्यतिरेकाभ्यां गम्यते। न चावहननवन्नियमार्थो विधिरिति शक्यते वक्तुम्। व्रीहयो हि क्रतुप्रकरणपठिताः। ततः क्रत्वर्थत्वादवघातेनैव सम्पादितैस्तण्डुलैः क्रतुफलभावनासिद्धिरिति तत्र नियमस्सम्भवति। प्रमाणान्तरागोचरतया तदैव तत्सिद्धिर्न तण्डुलस्वरूपे तद्विरोधात्। नखलुञ्छनेनापि तत्सिद्धेः। अध्ययनं त्वनारभ्याधीतम्। अतो न क्रत्वर्थतया तन्नियमः। अध्ययनेनैव स्वाध्यायं प्राप्नुयादिति स्वरूपप्राप्तिनियमस्तु प्रमाणान्तरविरुद्ध एव। स्वयमनधीयानस्यापि परपुरुषाध्ययनश्रवणेन पुस्तकनिरीक्षणादिना वा तत्प्राप्तिसम्भवात्। अत एव नार्थबोधोऽपि। यद्यप्यधीतात्स्वाध्यायादक्षरपदग्रहणपदार्थावधारणमुखेन दृष्टसामर्थ्यानुसाराद्वाक्यार्थज्ञानं जायमानं दृश्यते। फलवत्कर्मानुष्ठानोपकारकत्वात्पुरुषार्थश्च।

तथापि न तस्य फलभाव्यता, विध्यानर्थक्यप्रसङ्गात् । अन्तरेणापि विधिमध्ययनस्यान्वयव्यतिरेकाभ्यामर्थज्ञानार्थतासिद्धिः । न चाध्ययनादेर्भावितस्वाध्यायमूलमेव ज्ञानं क्रत्वनुष्ठानाङ्गमिति नियमस्संभवति, क्रतुसंस्पर्शाभावात् । तस्मात् 'यदृचोऽधीते पय आहुतिभिरेव तद्देवांस्तर्पयति, यद्यजूंषि घृताहुतिभिर्यत्सामानि सोमाहुतिभिः' इत्यारभ्य 'त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति' इत्यध्ययनतृप्तदेवताप्रसादलभ्यायुरादिप्राप्तिरर्थवादे श्रूयते । तस्मात् 'फलमात्रेयो निर्देशात्' इति रात्रिसत्रन्यायेनार्थवादिकमेव फलं भाव्यतया सम्बध्यते । अध्ययनं तु करणतया, स्वाध्यायस्तु तन्निर्वर्तकतया । यथा 'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति' इत्यत्र 'रात्रीमुपेयुः' इति रात्रिसत्राख्यं कर्म विधीयते । तत्र प्रतितिष्ठन्ति इत्यर्थवादः । तत्र भावनाया भाव्याकाङ्क्षायां विश्वजिन्न्यायेनाश्रुतस्वर्गादिकल्पने प्रतिपत्तिगौरवाच्छ्रुतमेवार्थवादिकं प्रतिष्ठाख्यं फलं भाव्यतया निर्णीतम्, तथाऽत्रापि । ततश्च स्वाध्यायस्य फलशेषतयाऽन्यपरत्वात्तेभ्योऽर्थप्रतीतिरनुपपन्ना, व्युत्पत्तिविरहात् । वृद्धव्यवहारे ह्यनन्यपराण्यक्षराणि बोधकतया व्युत्पन्नानि । व्युत्पत्त्यपेक्षश्च शब्दार्थावगमः । या पुनरन्यपरेभ्योऽपि तेभ्योऽर्थावगतिः सा भ्रान्तिरेव, अविवक्षितत्वात् । अत एव "ऐन्द्या गार्हपत्यमुपतिष्ठते" इति गार्हपत्योपस्थाने विनियुक्ताया ऐन्द्या ऋचः प्रतीयमानमपीन्द्रप्रकाशनमविवक्षितं, अन्यार्थत्वात् । अविवक्षितार्थः प्रतीयमानोऽपि न विचारार्हः, नापि प्रयोजनमिति विचारस्तावन्न कर्तव्यः । तदकरणे च तदुपायभूतन्यायपरिज्ञानमनुपयोगि । तदनुपयोगे च तन्निबन्धनं मीमांसाशास्त्रमनारम्भणीयमिति पूर्वः पक्षः ॥

अपरे तु विश्वजिन्न्यायेन स्वर्गार्थतया पूर्वपक्षमाहुः । तथाहि—आद्ये स्वीकरणाध्ययनविधौ आर्थवादिकं फलं न श्रूयते, किं तु धारणजपयज्ञाध्ययनविधौ । तदुक्तम्—

> **आद्ये त्वध्ययने नैव काचिदस्ति फलश्रुतिः ।**
> **धारणे जपयज्ञे च फलश्रुतिरियं यतः ॥**

इति । न ह्यत्र ततोऽर्थवादप्राप्तिः, तस्य प्राशस्त्यमात्रपरत्वात् । शब्दभावनेतिकर्तव्यताऽपि प्राशस्त्यमात्रं, न फलम् । अतो न तच्छेषतयाऽपि फलस्यातिदेशः । तस्मादध्ययनभावनायाः स्वर्ग एव भाव्यः । यथा 'विश्वजिता यजेत' इत्यत्र अश्रु-

तत्फलाया विश्वजिद्भावनायाः ' स स्वर्गस्स्यात्सर्वान्प्रत्यविशिष्टत्वात् ' इति न्यायात् स्वर्ग एव भाव्यः, तथाऽत्रापि । तस्मात्स्वर्गार्थत्वादध्ययनस्यानुवचनमात्रेण शास्त्रार्थसमाप्तेः अध्ययनानन्तरं न नियमेन विचारारम्भः । किं तु 'वेदमधीत्य स्नायात्' इति वचनात् ' कृतस्नातकादिव्रतस्सदृशीं भार्यामुपयच्छेत् ' इति वचनात्कृतदारः पश्चात्कर्मानुष्ठाने समुपनिवर्तिते विचारयितुमादौ । नन्वन्यार्थादध्ययनात्प्रतीयमानोऽर्थो न विवक्षितः । कथं विचाराभ्यनुज्ञा ? नैवम्—अन्यार्थस्याप्यर्थप्रतिपादनसम्भवात् । यथा—सिद्धान्ते ' याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिस्स्वाध्यायं वेदमधीयीत ' इति प्रायश्चित्तार्थेऽध्ययने विहितेऽपि न वेदस्याविवक्षितार्थताऽऽपद्यते । तथा स्वर्गार्थेऽप्यध्ययने द्रष्टव्यम् । न ह्यर्थप्रतिपादनस्वभावस्य वेदस्य कदा चिदन्यार्थत्वं कृतमित्येतावता स्वाभाविक्यर्थपरता हीयते । तत्सिद्धं नाध्ययनानन्तरं नियमेन धर्मजिज्ञासा कर्तव्येति।

सिद्धान्तस्तु—अध्येतव्य इति तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वावगमात् तस्यैव भाव्यत्वं युक्तम् । अध्ययनक्रियायास्सकर्मकत्वात् । यद्यपि स्वाध्यायस्य निर्वर्त्यकर्मता नास्ति, विकार्यता वा, नित्यत्वात्, तथाऽपि प्राप्यकर्मता नानुपपन्ना । न चापुरुषार्थतया तस्य भाव्यत्वानुपपत्तिः, फलवत्कर्मावबोधोपयोगित्वात् । नन्वर्थावबोधोपयोगितया विधिरनर्थक इत्युक्तम् । नानर्थकः, नियमार्थत्वात् । ननु न नियमस्सम्भवति, क्रतुसंस्पर्शाभावादित्युक्तम् । स न सम्भवति, स्वाभाविकार्थपरतानुसारेण तदनुप्रवेशकल्पनाया एवोचितत्वात् । अन्यथा शब्दानां स्वाभाविक्यर्थपरता हीयते । ततश्च अध्ययनप्राप्तस्वाध्यायजन्यमेव ज्ञानमनुष्ठानाङ्गमित्युक्तं भवति । तत्र कर्मविधिष्वेवं नियमः। अध्ययनाविनाभूतस्वाध्यायजन्यमेव ज्ञानं कर्मानुष्ठानाङ्गमिति । अर्थवादेषु अध्ययनप्राप्तार्थवादप्ररोचिता एव क्रियमाणाः क्रतवः फलभावनाङ्गमिति । मन्त्रेष्वध्ययनगृहीतमन्त्रजन्यमेव क्रतुषु स्मरणीयपदार्थस्मरणं फलभावनाङ्गमिति । स्तोत्रशस्त्रेष्वध्ययनोपात्तस्तोत्रशस्त्रैरेव गुणिनिष्ठगुणप्रकाशनमिति । उपनिषत्स्वपि यानि कर्तृभोक्तृसंसार्यात्मप्रतिपादनपराणि तैरध्ययनोपात्तैरेव भूतभौतिकसङ्घातिरिक्तं पारलौकिकफलोपभोगयोग्यमात्मानं ज्ञात्वा क्रतुरनुष्ठेय इति । यानि त्वकर्तृभोक्तृसंसार्यात्मपराणि ' अपहतपाप्मा विजरोऽमृत्युर्विशोको विजिघत्सोऽपिपासुस्सत्यकामस्सत्यसंकल्पः, तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानन्दमयः, अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा, पतिं विश्वस्यात्मेश्वरम् ' इत्यादीनि तेषु तज्ज्ञानस्य " सर्वान् कामानवाप्नोति, एतमानन्दमयमात्मानमुपसङ्क्रम्य, इमान्लोकान् कामान्नी कामरूप्यनुसञ्चरन्, न स पुनरावर्तते " इत्यादिभिः प्रदर्शिताभ्युदयनिश्रेयसफलत्वादध्ययनोपात्तैर्वाक्यैस्सम्पादि-

तमेव ज्ञानं तादृशफलाङ्गमिति । अध्ययनाश्रितश्च कालनियमो व्रतादिनियमश्चाऽध्ययनाङ्गमेव ।

श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि ।
विप्रश्छन्दांस्यधीयीत मासान्युक्तोऽर्धपञ्चमान् ॥

इति । तथा—

वेदाङ्गानि रहस्यं च कृष्णपक्षेषु सम्पठेत् ॥

तथा—

भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ॥
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥

इत्यादीनि । उपनयनमप्यध्ययनाङ्गमेव, माणवकसंस्कारत्वात् । एवं चानन्यपरत्वात्स्वाध्यायस्य फलवत्कर्मावबोधोत्पत्तिर्विचारस्य विषयप्रयोजनलाभाच्छास्त्रमारम्भणीयम् । ततश्चाध्ययनानन्तरं गुरुकुलस्थितेरर्थवत्त्वात्तदनन्तरं निवृत्तिपदवद्वेदमधीत्य स्नायादिति वचनमपन्यायमूलमिति मन्तव्यम् । ततश्च स्नानं मीमांसाश्रवणानन्तरभावितया स्वस्थानादुत्कृष्यते । अत एव सूत्रकार आनन्तर्यविषयप्रयोजनपरमाद्यसूत्रं शास्त्रादावेव निबबन्ध ' अथातोधर्मजिज्ञासेति ' तच्च व्याख्यातम् ॥

अथातोधर्मजिज्ञासासूत्रमाद्यमिदं कृतम् ॥
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥

इति । अत्रायमथशब्द आनन्तर्ये । अतश्शब्दो हेतुभावे । धर्मो विषयः । एतच्चाधर्मस्याप्युपलक्षणम्, तस्यापि जिज्ञास्यत्वात् । तन्निर्णयः फलम् । तदुपायश्च मीमांसा । अध्ययनानन्तरं वेदस्य विवक्षितार्थत्वाद्धर्मजिज्ञासा कर्तव्येति सूत्रार्थः ।

जिज्ञासा च त्रिधा—उपनयनानन्तरं हितैषिवृद्धेभ्यो धर्माधर्मावभ्युदयानभ्युदयप्राप्तिपरिहारफलौ ज्ञातव्याविति श्रुतवतो माणवकस्य प्रथमा । कौ तौ कथं वा तज्ज्ञानमिति तदनन्तरं तदर्थतया विहितमध्ययनं तेभ्य एव श्रुत्वाऽधीते । वेदे तज्ज्ञानानुदयात् कस्तदुपाय इति निरुक्तव्याकरणादिविषया । तदनन्तरं अङ्गाध्ययनसंस्कृतास्स्वाध्यायादापाततः पदार्थवाक्यार्थप्रतीतावपि न्यायानवधारणात्संशये तन्निर्णयार्थं मीमांसाविषया । तदुक्तम्—

**जिज्ञासैकोपनीतस्य द्वितीया पठितश्रुतेः ।**
**ज्ञातविद्यन्तरस्यान्या या मीमांसापुरस्सरा ॥**

इति । अपरे तु क्रत्वनुप्रवेशाभावेन संस्कारविधित्वं तन्मूलो नियमश्च दुर्वच इति मन्वाना अपूर्वविधित्वमेवाहुः । तथा हि—अध्येतव्य इत्यत्र वाक्यार्थज्ञानमेव भाव्यम्, पदग्रहेण पदार्थावधारणादिदृष्टसामर्थ्यानुसारेण दृष्टप्रयोजनत्वात्, न तु स्वर्गः, अदृष्टप्रयोजनत्वात् । दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । अतोऽध्ययनेन अर्थज्ञानं भावयेदित्यप्राप्तविधिरेव, न त्वध्ययनेन स्वाध्यायं भावयेदिति संस्कारविधिः, तस्य क्रतुसंस्पर्शाभावेन संस्कारत्वायोगात्, सक्तुवत् । तदुक्तम्—

**भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हति ।**
**सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च कुत्र चित् ॥**

इति । नन्वर्थज्ञानार्थत्वे विधिरनर्थक इत्युक्तम् । सत्यम्, नियमार्थत्वात् । ननु क्रत्वनुप्रवेशाभावात्प्रमाणान्तरविरोधाच्च तदसम्भव इत्युक्तम् । सत्यम्—यदि नियमो वाक्यार्थस्स्यात् । न चैवं, फलतस्तदुपपत्तेः । तथा हि—यावत्कर्मानुष्ठानज्ञानोपायतया अध्ययनलिखितपाठादिनानोपायानुसन्धानं नोत्प्रेक्ष्यते तावद्द्विजातीनामुपनीतानामुपनयनप्रक्रमाधीनतया प्रत्यक्षश्रुत्याऽध्ययनं विधीयते, श्रुतेर्लिङ्गतः शीघ्रप्रवृत्तेः । उपायान्तरप्रतीतिस्तु लिङ्गात् । विहिते तु तस्मिंस्तदापादितज्ञानैरेव लब्धानुष्ठानान्युत्तरकर्माणि स्वज्ञानसिद्ध्यर्थमुपायान्तरं नाक्षिपन्तीति फलतो नियमसिद्धिः । न चैतावताऽध्ययनस्य क्रत्वर्थत्वप्रसङ्गः । तदापादितं ज्ञानं क्रत्वङ्गं, तेन विनाऽनुष्ठानासम्भवेन सामर्थ्यादेव तदङ्गत्वसिद्धेः । अध्ययनं तु ज्ञानाङ्गमेव । यथा आधानसाध्यानामग्नीनां क्रत्वङ्गत्वेऽपि नाधानस्य तदङ्गत्वम्, यथा वा द्रव्यस्य क्रत्वङ्गत्वेऽपि तदुपायभूतानां याजनादीनां न तदङ्गत्वम् । फलतो नियमोपपादनं च न्यायरत्नमालाया व्याख्याने नायकरत्ने प्रपञ्चितमस्माभिः । अथवा न केवलं क्रत्वर्थतयैव नियमः, प्राङ्मुखतादिवद्द्रव्यार्जनादिवच्च पुरुषार्थविषयतयापि तदुपपत्तेः । तेनाध्ययनविधिविहितोपनीतकर्तृकव्रतनियमादीतिकर्तव्यतोपेताध्ययनपूर्वकज्ञानवतामेवोत्तरकर्मस्वधिकार इति सिद्धम् । यथाऽऽधानलब्धाग्नीनाम् । अत एव नात्रैवर्णिकानामधिकारः । तस्मादर्थज्ञानकामस्याध्ययनेऽधिकार इति सिद्धम् ।

ननु कथमर्थज्ञानं प्रयोजनं हुं-फट्-वौषडादिशब्देष्वव्याप्तेः ? कथं च क्षत्रियाद्यधिकारिकाश्वमेधप्रतिपादकवेदभागस्य ब्राह्मणादिभिरध्ययनम् ? यद्यपि ब्राह्मणस्य कथं चिद्याजनोपयोगिज्ञानार्थमध्ययनं स्यात्, तथापि क्षत्रियवैश्ययोः वैश्यस्तोमाश्वमेधाध्ययनमनर्थकमेव । जपयज्ञपारायणप्रयोगेऽप्यर्थज्ञानमनुपयोगि । उच्यते—न केवलार्थविज्ञानसिद्धिरस्य प्रयोजनमपेक्षितं दृश्यते, यत्सर्वं तत्फलमिष्यते । यदेव हि विध्यन्तरापेक्षितं अध्ययनसाध्यं दृश्यते तत्सर्वं प्रयोजनम् । तेन क्रतुविधिभिः तज्ज्ञानमपेक्षितमिति यथा तत्प्रयोजनं, एवं नित्यनैमित्तिकजपयज्ञपारायणादिविधिभिः । ‘अहरहस्स्वाध्यायोऽध्येतव्यः, याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिस्स्वाध्यायं वेदमधीयीत,’ तस्मात्स्वाध्यायोऽध्येतव्यो यं यं क्रतुमधीते तेन तेनास्येष्टं भवति’ इत्यादिभिःस्वाध्यायग्रहणमपेक्षितमिति भवति तत्प्रयोजनम् । न चैवं नानाप्रयोजनस्वीकाराद्वैरूप्यमध्ययनविधेः । अध्ययनेन यत्संपादयितुं शक्यं तत्कुर्यादित्येकयैव वचोभङ्ग्या सर्वार्थलाभेन वैरूप्याभावात् । न चैवं नानाप्रयोजनकल्पनम्, तेषां क्लृप्तत्वात् । स्वाध्यायस्य नानाप्रयोजनसाधनत्वं क्लृप्तमेव । अर्थज्ञानार्थस्याप्यध्ययनस्य स्वाध्यायसंस्कारत्वमपि नानुपपन्नम् । यथा—साम्ना स्तुवीतेत्यत्र स्तुतौ विनियुक्तस्यापि गीतिरूपस्य साम्नः तदाधारऋगक्षरसंस्कारत्ववत् अध्ययनस्य स्वाध्यायसंस्कारत्वम् । ऋगक्षराणां स्तुतिशेषत्ववत्स्वाध्यायस्यार्थज्ञानशेषत्वमपि नानुपपन्नं, सर्वविध्यपेक्षिततयाऽधानवदाभ्यकानुष्ठानं चाध्ययनम् । अत एव नित्यं च । तस्मादर्थज्ञानार्थत्वादध्ययनविधेः विचारमन्तरेण तदसम्भवादनन्तरं धर्मजिज्ञासा कर्तव्येति सिद्धम् ॥

अत्रोच्यते—स्वाध्यायस्य संस्कार्यत्वं तावदनुपपन्नं, क्रत्वङ्गतया विनियोगासम्भवात्, अविनियुक्तस्य च संस्कारानर्हत्वात्, सक्तुवत् । न चार्थज्ञानमुखेन पर्णतादिवत्क्रतुसम्बन्धः, क्रतुप्रयोगबहिर्भूतस्याप्यर्थज्ञानस्य सम्भवेन तज्ज्ञानस्य क्रतुसम्बन्धव्यभिचारात् । न हि स्वाध्यायादर्थज्ञानं क्रतुप्रयोगकाल एव जायते नान्यदेति नियमस्समस्ति । जुह्वादीनां त्वव्यभिचरितक्रतुसम्बन्धापर्णतायास्तन्मुखेन तदनुप्रवेशो युक्तः । नास्य प्राप्तविधित्वेऽप्यर्थात्स्वाध्यायसंस्कारः, अध्ययनविधेःरप्रकरणाधीतत्वात् । स्वाध्यायस्यार्थज्ञाने विनियोगादर्शनेन भूतभाव्युपयोगाभावात् । न च साम्ना स्तुवीतेत्यत्र साम्नां स्तोत्रे विनियोगबलादेवर्चां पृथक्स्तोत्रविनियोगाभावेऽपि ऋगक्षरसंस्कारमुखेन साम्नां स्तोत्रोपयोगात् । ऋचामपि स्तोत्र-

विनियोगसिद्धिवदध्ययनस्यार्थज्ञाने विनियोगादेव स्वाध्यायस्यापि तत्र विनियोगस्सिऽयतीति युक्तम् । तत्रापि श्रुत्यादिविनियोजकप्रमाणासंभवेन ऋचां स्तोत्रशेषतया विनियोजकाङ्गीकारात् । नाप्यर्थज्ञानकामोऽधिकारी, तदश्रवणात् । ज्ञायमानो ह्यधिकारः प्रयोजनम् । न ह्यध्ययनप्रवृत्तेः पूर्वं माणवकेनार्थज्ञानं ज्ञायते । अथाध्ययनसाध्यमेवाधिकारमुपदिशन्तो हितैषिणः प्रवर्तयेरन्, तर्हि परप्रयुक्तिरेवाङ्गीकृता स्यात् । ततो वरं वेदाध्यापनप्रयुक्तिः । किं चाध्यापकोऽपि हितैषी । अथ ‘ रौद्रं वास्तुमयं चरुं निर्वपेत्’ इति प्रकृत्य ‘ एतया निषादस्थपतिं याजयेत् ’ इत्यत्र द्रव्यार्जनार्थप्रवृत्तेः ऋत्विग्भिर्ज्ञाप्यमानोऽप्यत्रैवर्णिकेन निषादस्थपतिना स्वयमज्ञायमानोऽपि स्थपत्यधिकार एव यथा प्रयोजकः तथा माणवकेनाज्ञायमानोऽपि हितैषिवचनाज्ज्ञाप्यमानो माणवकाधिकार एव प्रयोजकस्स्यात् । न स्यात् । न ह्यष्टवर्षस्य तस्य प्रबुद्धस्थपतिन्यायेन पुरुषार्थकामना सम्भवति । नापि पूर्वपक्षे बालिशस्य तस्यार्थवादिकफलकामना स्वर्गकामना वा सम्भवति । तस्मात्परप्रयुक्त्यैव पूर्वोत्तरपक्षौ युक्तौ । तदुच्यते—तत्र किं शास्त्रमारम्भणीयमुत नेति प्रथमविचारः । तदर्थं किं स्वाध्यायो विवक्षितार्थः उत न ? । तदर्थमपि किमध्ययनस्याध्यापनविधिप्रयोजननिर्वृत्तिरेव प्रयोजनं, किं वाऽर्थज्ञानमपीति । कः खल्वध्यापनविधिः, यत्प्रयुक्तमध्ययनं स्यात् ? उच्यते—

**उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः ॥**
**सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥**

इति स्मृतिवचनानुमितमुपनीयाध्यापनेनाचार्यकं भावयेदित्येवंरूपम् । अलौकिकं चाहवनीयादिवदाचार्यकम् । स च पुरुषार्थः । आचार्याय प्रियं धनं आहरेद्धितमाचरेदित्यादिशिष्टस्मृतिविहितधनाहरणादिपातित्वात्तल्लिप्सया चाध्यापने प्रवृत्तिः । अध्यापनं च तन्निष्पत्त्युपायः । यथा दीक्षणीयेष्टिर्दीक्षितत्वस्य । अध्ययनविधिरपि स्वतन्त्र एव, भिन्नप्रकरणपरिपाठात् । प्रथमं निरधिकारश्च, फलाश्रवणात् । अत एव निर्नियोज्यकः । अध्ययनं चाध्यापनोपयोगीति सिद्धम्, तदन्तरेण तदनिर्वाहात् ।

केचिदध्यापनविधावपि नियोज्यो नास्ति तदश्रवणादित्याहुः । तन्न । ‘ तमाचार्यं प्रचक्षते ’ इत्याचार्यककामलाभात् ।

ननु दीक्षितत्ववदाचार्यकमलौकिकमध्यापनसाध्यम् । तच्चोदनागम्यं च ।

कथं तत्र कामना ? । प्रमाणान्तरप्रतिपन्नेऽर्थे हि कामना । कथं वा तत्कामस्याधिकारः ? सत्यम्—लौकिकस्यापि तस्य शिष्यकर्तृकदक्षिणादानादिनिमित्ततया कामनोपपत्तेः ।

नन्वाचार्यकं न नियोगफलं, किं तु विषयफलम् । यदेव नैयोगिकं फलं तदेवाधिकारिविशेषणम् । ततश्च कथं तत्कामोधिकारी ? मैवम्—अर्थज्ञानेऽपि तुल्यमेतत् । तदपि न नियोगफलम्, किं तु विषयफलमेव । किं चाचार्यकं वाक्यात्प्रथमप्रतिपन्नम्, इदं तु नेति वैषम्यम् ।

ननु नेदं वचनमध्यापनविधायकं, किं तु द्रव्यार्जनार्थप्रवृत्ताध्यापनविध्यनुवादपरमिति । मैवम्—वैरूप्यात, इदं त्वाचार्यकफलकम् । तत्तु द्रव्यप्राप्तिफलं, अयमपूर्वविधिः, स पुरुषार्थनियमपरः, याजनादिनैव द्रव्यं सम्पादयेदिति । ततश्चैवं पूर्वपक्षः—अध्यापनविधिप्रयुक्तस्य स्वाध्यायाध्ययनस्य प्रयोजनापेक्षायां पुरुषान्तरगामित्वेन बहिरङ्गमपि प्रथमावगतत्वेनाध्यापनप्रयोजनमाचार्यकमेव प्रयोजनं युक्तं, न त्वर्थपरिज्ञानं, पश्चाद्भावित्वात् । तेनाध्ययनस्याध्यापननिष्पत्त्यर्थत्वात्स्वाध्यायस्य च तच्छेषत्वान्न तदर्थविवक्षा । अविवक्षितश्चार्थो न निर्णेतव्यः, प्रयोजनाभावात् । अकर्तव्ये च निर्णये न विचारः कर्तव्य इति तदात्मकं शास्त्रमनारम्भणीयमेव । किं च न केवलं स्वोपकारकतयाऽध्यापनमध्ययनं प्रयुङ्क्ते । किं तु स्वाङ्गद्वारा उपनयनं च क्त्वाप्रत्ययेन समानकर्तृकमवगम्यमानमध्यापनाङ्गमेव, स हि समानकर्तृकप्रयोगैक्यपरः, तस्य च द्वारापेक्षायां उपनेयासत्तिरेव द्वारमवगम्यते । उपनेयोऽपि नाकिंचित्कुर्वन्नङ्गमिति तस्य द्वारापेक्षायां उपनयनप्रक्रमाधीनमध्ययनमेवोपकारतया व्यापारत्वेन पर्यवस्यति । एवं च वैधमेवाध्ययनम्, व्रतनियमविशेषोऽपि । तं कुर्वन्माणवकोऽध्यापनोपकारीत्यवगमात्तद्विषयमेवाध्यापनमाचार्यकसाधनम् । ततश्च तत्प्रयुक्ताध्ययननिष्पत्त्या च लब्धसिद्धिरध्ययनविधिस्स्वविषयानुष्ठानार्थं नाधिकारमपेक्षते । तेन न विश्वजिन्न्यायस्य विषयो नापि रात्रिसत्रन्यायस्य । अनन्यप्रयुक्तविषयानुष्ठानसाध्यनियोगविषयत्वात्तयोः । अत एव न पराभिमतपूर्वपक्षोपपत्तिः । यत उपनयनमध्यापनाङ्गमत एव तच्छून्यानामत्रैवर्णिकानामनधिकारः ।

अन्ये पुनरध्ययनस्याध्यापनविधिप्रयुक्ततया तदङ्गतामाहुः । तदयुक्तम्, प्रयुक्तेस्तादर्थ्यव्यभिचारात् । यथोत्तरक्रतुविधिप्रयुक्तस्याप्याधानस्य न तदङ्गत्वम् । तेनाध्ययनस्याचार्यविधिसिद्धिप्रयोजनत्वात्तन्निर्वर्तकतया स्वाध्यायस्याविवक्षितार्थत्वम् । ततश्च तन्निर्णयौपयिकं शास्त्रमनारम्भणीयमिति पूर्वः पक्षः ।

राद्धान्तस्तु—यद्यपि प्रयोजकविध्यधिकारः पूर्वभावी, तथापि न तत्सिद्धि- रेवास्य प्रयोजनं, बहिरङ्गत्वात्। किं तु कर्तृगामित्वादन्तरङ्गत्वादर्थज्ञानं प्रयोजनत्वेन स्वीक्रियते। यत्कर्तृकं हि यत्कर्म तस्यैव तत्प्रयोजनं युक्तम्। ननु प्रयोजनापेक्षम- ध्ययनं प्रथमावगतत्वेनाचार्यकमेव स्वीकरोति। स्वीकृते तस्मिन्नपेक्षाभावादन्तरङ्गमपि न प्रयोजनं भवितुमर्हति। मैवम्—प्रथममाचार्यकस्याध्ययनविधिप्रयोजनत्वेन अनवकल्पनात्। यद्यकल्पिते तस्मिन्ननुष्ठानं न सिध्येत् ततस्तत्कल्प्यते। न त्वेतदस्ति, तथात्वेऽप्यनुष्ठानस्योपपादितत्वात्। अनुष्ठिते तु तस्मिन् पश्चात्प्रयोजनापेक्षा, सर्व- स्यापि स्वतन्त्रविधेरधिकारिनिरपर्यवसानात्। सत्यां च तस्यां अध्ययनविधिरन्तरङ्ग- त्वादर्थज्ञानं प्रयोजनतया स्वीकरोति। स चायमधिकारोऽध्ययनात्प्रागनवगतः पश्चा- दवगम्यते, अङ्गाध्ययनसंस्कृतात्स्वाध्यायादर्थावगमदर्शनात्। स इदानीमध्येता मन्यते मदुपयोगिकर्मावबोधजनकतया मदर्थमिदमध्ययनमिति ह्ययं मध्येऽधिकारः, अध्ययन- मीमांसाश्रवणयोर्मध्ये स्थितः। ततोऽस्य विधेर्नियोज्यो नास्ति। अधिकारी तु विद्यते। इममेवाधिकारमालोच्य पित्रादयोऽर्थदानादिनाऽध्यापकानानमय्य पुत्रादी- नुपनाययन्ति।

ननु विधिसिद्धिरेव तत्प्रयोजनं स्यात्, नार्थज्ञानम्। मैवम्—विषयस्वभाव- लब्धस्य तस्यापि प्रयोजनत्वात्। नन्वेकस्मिन्विषये प्रयोजनद्वयं विरुद्धमिति चेत्, न। एकस्य शाब्दत्वादितरस्य चार्थत्वात्। केचित्तु 'माणवकमुपनयीत, तमध्या- पयीत, इति श्रुताध्यापनविध्यनुसारेणाध्यापनविध्यधिकारप्रयोजनत्वमध्ययनविधेर्निरा- कुर्वन्ति। यद्यध्यापनविध्यधिकारप्रयोजनत्वमध्ययनविधेः स्यात् तदाऽध्यापनविधेरपि स्वाध्यायान्तर्गतत्वेनाविवक्षितार्थत्वात्तत्प्रयुक्तता न सम्भवति। स्वशाखा हि स्वाध्या- यशब्देनोच्यते। साक्षादधीतस्त्वध्यापनविधिः। नूनम्—केषां चिच्छाखिनां स्वशाखा- न्तर्गतो भवेदिति स्वाध्यायस्य अविवक्षितार्थत्वेन तस्याप्यविवक्षितार्थत्वान्न तत्प्रयुक्त- त्वमवकल्पत इति पश्चाद्ध्यायर्थावबोधोपयोगितयाऽध्येतुरेवाधिकारोऽध्ययनविधेः प्रयो- जनं, तन्न केवलाध्ययनसाध्यमिति स्वप्रयोजनसिद्धयेऽध्ययनविधिरेव विचारमाक्षिपतीति तदात्मकं' शास्त्रमारब्धव्यमिति। अत एव भगवान् सूत्रकारो मीमांसाश्रवणस्य गुर्वायत्तत्वात् गुरुकुलान्निवृत्तिमात्रं निवारयन् भिक्षाचरणादिसकलब्रह्मचारिधर्माननु- मन्यमान आह–'अथातो धर्मजिज्ञासा' इति। सूत्रं च परमतोपन्यासममये व्याख्यातम्। नात्रातीव विप्रतिपत्तिः। इत्थमलौकिकादिविषयं शास्त्रं तत्प्रतिपाद्यं च

कार्यात्मकं विधितत्त्वम् । तच्च शास्त्रं मीमांसासहकृतमेव प्रमाणम् । सा चारम्भणीयेति सिद्धम् ।

गम्भीरं गुरुतन्त्रसागरमुखं येऽन्तः प्रवेष्टुं ततः
तत्पारं प्रतियातुमुत्सुकधियस्तेषां कृते निर्मितम् ॥
सम्यक्तन्त्ररहस्यमेतदुचितैः शब्दैश्च योग्यक्रमं
न्यग्भूतप्रतितन्त्रमार्गगतिभिर्न्यायव्रजैर्योजितम् ॥
आम्नायान्तिमसीमनि स्फुरति यस्सद्भावनागोचरः
स्वेस्वे कर्मणि यः प्रशास्ति पुरुषं योग्याधिकारक्रमात् ॥
आदत्ते विविधोपकारमखिलैरङ्गैरशेषाङ्गिनां
साक्षाद्विष्णुरिवैधते विधिरसौ नानावताराश्रयः ॥

इति श्रीमद्रामानुजाचार्यविरचिते तन्त्ररहस्ये
शास्त्रारम्भपरिच्छेदः पञ्चमः ॥



# शुद्धाशुद्धपाठौ ।



| पृ. | प. | अशुद्धः | शुद्धः |
|---|---|---|---|
| ३ | ६ | व्यहार | व्यवहार |
| ६ | ११ | वत्त्वम् | तथात्वम् |
| २२ | १७ | प्रतिपत्त्य | प्रतिपत्तृ |
| २६ | १२ | एक | एव |
| २९ | ८ | अपरे नु | अपरे तु |
| ,, | १३ | पदान्यत्यं | पदान्यत्वं |
| ,, | २३ | शद्ध | शब्द |
| ३३ | १ | वृद्धस्प | वृद्धस्य |
| ,, | ४ | व्यत्पत्य | व्युत्पत्त्य |
| ३४ | २० | वोद्ध | वोद्ध |
| ३६ | २ | क्रमेणा | क्रयेणा |
| ३७ | १ | व्यक्तिमत्तेव | व्यक्तिम त्तैव |
| ,, | २० | लघीयत्वात् | लघीयस्त्वात् |
| ३८ | १९ | थथा | यथा |
| ,, | २२ | वाल्य | वाक्य |
| ,, | २३ | मेवम् | मैवम् |
| ,, | २४ | संघानात्म | संघातात्म |
| ३९ | २ | प्रतिपाति | प्रतिपत्ति |
| ,, | ९ | वाक्यम्पा | वाक्यस्या |
| ४० | ८ | एत्र | एव |
| ६१ | १० | तस्मादुत्तिर्ण | तस्मादुत्तीर्ण |
| ६५ | १३ | नह्यध्यापन | न ह्यध्यापन |
| ,, | १९ | नेवम् | नैवम् |
| ६५ | २५ | ज्ञुऽष्ठाने | ज्ञुष्ठाने |
| ,, | २६ | न्यथो | न्वयो |

| | | | |
|---|---|---|---|
| ६६ | १६ | षुगुणिनिकारोगुण | गुणिनिष्ठगुण |
| ६७ | ७ | याद्यपूर्व | याद्यपूर्व |
| ६९ | २ | घ्द्यनु | दृष्ट्यनु |
| ७० | ५ | तथाआरा | तथा आरा |
| ,, | ९ | दि षट्क | दिषट्क |
| ७२ | २ | ष्टान | ष्ठान |
| ,, | ३ | धङ्ग | धाङ्ग |
| ७३ | ३ | भाब्ये | भाष्ये |
| ७८ | १७ | याऽधान | याऽऽधान |
| ,, | २० | दपुपन्नम् | दनुपपन्नम् |
| ,, | २६ | विधेःरप्र | विधेरप्र |
| ,, | २८ | गात् । ऋचा | गादृचा |
| ८० | ७ | नाथ | नार्थ |
| ,, | १२ | निष्यत्त्पर्थ | निष्पत्त्यर्थ |
| ,, | १६ | कर्तृत्क | कर्तृक |
| ,, | २८ | रम्भणीय | रम्भणीय |

